* श्रीः *

—— हरिदास-संस्कृत-ग्रन्थमाला ——

२३५

॥ श्रीः ॥

# अव्ययकौमुदी-रहस्यम्

## [ प्रश्नोत्तरी ]

रचयिता—

पण्डित श्री रामचन्द्र झा व्याकरणाचार्यः



प्रकाशकः

चौखम्बा-संस्कृत-सीरिज बनारस-१

सं० २०१० ]  [ ई० १९५३

# प्राक्कथन

सर्वसाधारण मध्यमा परीक्षाके अनिवार्य पत्रमें निर्धारित मध्यकौमुदीकी सबसे सरल सुविस्तृत 'सुधा-इन्दुमती' संस्कृत-हिन्दीटीकाका सम्पादन करनेके पश्चात् शास्त्रान्तरमें प्रविष्ट छात्रोंकी विशेष सुविधाके लिये मैंने मध्यकौमुदीकी लघु टीकाके रूपमें ही इस प्रश्नोत्तरीका निर्माण किया है। इसमें परीक्षामें आये हुए प्रश्नोंके अतिरिक्त भी प्रायः सभी प्रष्टव्य स्थलोंकी परीक्षोपयोगी व्याख्या की गई है। सन् १९५३ तक की परीक्षामें आये हुए प्रश्नोंके आगे तत्तत् ईस्वियोंकी संख्या देकर उनके उत्तर प्रकरणानुसार लिखे गये हैं। प्रश्नोंके अविकल रूप पुस्तकके अन्तमें यथावत् छापे गये हैं। परीक्षार्थियोंको चाहिये कि अध्ययनके समयसे ही प्रकरणानुसार नियमतः इस प्रश्नोत्तरीका भी मनन करें। ऐसा करनेपर परीक्षाके समय छात्रोंको प्रश्नोत्तरी रटनेकी आवश्यकता नहीं होगी और वे अनायासेन परीक्षा-महार्णवको पार कर जांयगे।

काशी<br>
सं० २०१०

विनीत—<br>
श्री रामचन्द्र झा

मुद्रक:—विद्याविलास प्रेस, बनारस-१

॥ श्रीः ॥

# मध्यकौमुदी-रहस्यम्

## ( प्रश्नोत्तरी )

ओङ्कारं मुरलीधरं प्रभुवरं वृन्दावनाधीश्वरं
भक्ताभीष्टफलप्रदं सुरवरैरासेव्यपादाम्बुजम् ।
वन्दे रासविहारिणं निजजनानन्दप्रियं माधवं
श्रीराधादिसमस्तगोपवनितासंसेव्यमानं प्रभुम् ॥

## अथ संज्ञाप्रकरणम्

**आदिरन्त्येन सहेता**—'आदिः, अन्त्येन, सह, इता' इति पदविभागः। अत्र सूत्रे आद्यन्तशब्दाभ्यां मध्यगाः आक्षिप्यन्ते, 'स्वं रूपम्' इति सूत्रात् 'स्वम्' इत्यनुवर्तते, ततश्च—

अन्त्येन इता सह उच्चार्यमाणः आदिः ( अण् , अच् , इत्यादिरूपः ) मध्यगानां स्वस्य च प्रत्याहारसंज्ञेति सूत्रार्थो लभ्यते। उदाहरणं यथा—'अ इ उ ण्' इति सूत्रघटक 'अण्' इति अत्र अन्त्येत्संज्ञकवर्णः 'ण्' इति, तेन सह उच्चार्यमाणः, आदिवर्णः 'अण्' इति, स च ( अण् ) मध्यगानाम् ( इ, उ, इत्यनयोः ) स्वस्य ( 'अ' इत्यस्य ) च संज्ञको भवति। ( एवमन्यत्राप्यूह्यम् )।

**ऊकालेति सूत्रेऽज्ग्रहणस्य किं फलम्**—ननु हलामर्धमात्रिकत्वेन वा काल इव कालाभावात् व्यावर्त्याऽभावेन 'ऊकाले'ति सूत्रे अज्ग्रहणस्य किं फलमिति चेन्न, अज्ग्रहणाऽभावे प्रतक्ष्य, प्ररक्ष्य इत्यादौ 'क् ष्' इति द्वाभ्यां मिलितस्य क्ष्' इत्यस्य एकमात्रिकत्वेन 'ऊकाले'ति सूत्रेण तस्य ह्रस्वसंज्ञायां 'ह्रस्वस्य पिति कृति तुक्' इति तुगागमापत्तेः ॥

अचां के प्रयत्नाः (ई० १९४१, ४६)—प्रयतनं प्रयत्नः। स च द्विविधः—आभ्यन्तरो बाह्यश्च। तत्र—

**आभ्यन्तरप्रयतने**—अचां विवृतप्रयतनम्, तत्राऽपि ह्रस्वस्याऽवर्णस्य प्रयोगे (साधनिकादशायां) संवृतप्रयतनमिति विशेषः। शास्त्रीयप्रक्रियाभिः परिनिष्ठितानां 'रामः' 'कृष्णः' इत्यादिशब्दानां प्रयोगे क्रियमाणे एव ह्रस्वस्याऽवर्णस्य संवृतमित्यर्थः। अत एव 'दण्ड आढकम्' इति स्थिते अकाराऽऽकारयोः प्रयत्नसाम्यात्सवर्णदीर्घत्वं सिद्धम्।

**बाह्यप्रयतने**—अचां तु अल्पप्राणः, संवारः, नादः, घोषः इति चत्वारः प्रयतनाः भवन्तीति तत्त्वविदः।

**अणुदित्सवर्णस्य चाप्रत्ययः**—(ई० ४५) प्रतीयते = विधीयते, इति प्रत्ययः। उत् इत यस्य स 'उदित्' = कु चु टु तु पु इत्यादिः। चकारात् 'स्वं रूपम्' इत्यतःस्वमित्यनुवर्तते, तच्च षष्ठ्यन्ततया विपरिणम्यते। ततश्च—'अविधीयमानोण् उदिच्च सवर्णस्य संज्ञा स्यादित्यर्थो भवति। अत्र सूत्रे एव अण् प्रत्याहारः परेणणकारेणेति भाष्यराद्धान्तः।

इति संज्ञाप्रकरणम्।



# अथ अच्सन्धिप्रकरणम्

**धात्रंशः**—(ई० ४५)-'धातृ अंशः' इति दशायां 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति 'स्थानेन्तरतमः' इति च परिभाषाद्वयसहकारेण ऋकारस्य यणि रकारे कृते 'धात्रंशः' इति सिद्धम्।

**हरये**—(ई० ५१)-'हरे ए' इति स्थिते 'यथासंख्यमनुदेशः समानाम्' इति सूत्रज्ञापकात् 'एचोऽयवायावः' इत्यनेन एकारस्य अयादेशे उक्तं रूपं सिद्धम्।

**विष्णवे**—(ई० ५२) 'विष्णो ए' इति स्थिते 'यथासंख्यमनुदेशः समानाम्' इति सूत्रज्ञापकात् 'एचोऽयवायावः' इति ओकारस्य अवादेशे 'विष्णवे' इति जातम्।

**पावकः**—(ई० ५३)—'पौ अकः' इति दशायां 'यथासंख्ये'ति नियमात् 'एचोऽयवायावः' इत्यनेन औकारस्य आवादेशे उक्तं रूपं सिद्धम्।

**गव्यम्** ( ई० ४०, ४७, ४९ )—गोर्विकारो गव्यम् ( विकारार्थे यत् )। 'गो यम्' इति स्थिते ओकारस्य अच्परकत्वाभावात् 'एचोऽयवायावः' इत्यप्राप्ते 'वान्तो यि प्रत्यये' इति ओकारस्य अवादेशे उक्तं रूपं सिद्धम् ।

**क्षय्यम्** ( ई० ४८ )—क्षेतुं शक्यं क्षय्यम् ( शक्यार्थे यत् ) 'क्षे य' इति स्थिते एकारस्य अच्परकत्वाऽभावाद् 'एचोऽयवायावः' इत्ययादेशेऽप्राप्ते 'क्षय्यजय्यौ शक्यार्थे' इति निपातनात्तस्य यान्तादेशे उक्तं रूपं सिद्धम् ।

**क्रय्यस्तदर्थे**—क्रय्यशब्दे यः क्रीञ्धातुः = यत्प्रत्ययप्रकृतिभूतः, तस्य योऽर्थः = अभिधेयः = द्रव्यविनिमयरूपः क्रयः स प्रकृतिभूतः तदर्थशब्देन विवक्षितः । तस्मै इदं तदर्थं = क्रयार्थं वस्तु । तथा च-क्रयार्थे वस्तूनि गम्ये क्रीञ्धातोर्यदौ प्रत्यये परे 'क्रय्य' इतीदं निपात्यते इति फलति ।

**क्रय्यम्**—( ई० ४३ )—क्रेतारः क्रीणीयुः इति बुद्ध्या आपणे प्रसारितं क्रय्यम् ( क्रीञः कर्मणि यत् ) 'क्रे य' इति स्थिते एकारस्य अच्परकत्वाभावात् अयादेशेऽप्राप्ते 'क्रय्यस्तदर्थे' इत्यनेन निपातनात्तस्य यान्तादेशेन स्वादिकार्ये 'क्रय्यम्' इति, निष्पन्नं भवति । अन्यत्र तु 'क्रेयम्' इति, क्रयणार्हमित्यर्थः ।

**कृष्णर्द्धिः** ( ई० ४१, ४५, ५२ )—'कृष्ण ऋद्धिः' इति स्थिते 'ऋकारस्य गुणवृद्धी अरारावेव' इति भाष्योक्त्या 'आद्गुणः' इत्यनेन अकार-ऋकारयोः स्थाने गुणे अकारे जाते 'उरण् रपरः' इति रपरत्वे उक्तं रूपं सिद्धम् ।

**तवल्कारः** ( ई० ४९ )—'तव लृकारः' इति दशायाम् 'आद्गुणः । इति गुणे 'उरण् रपरः' इति तस्य लपरत्वे 'तवल्कारः' इति ।

**हर इह** ( ई० ४८ )—'हरे इह' इति स्थिते 'एचोऽयवायावः' इति एकरस्य अयादेशे 'हरय् इह' इति दशायां 'लोपः शाकल्यस्य' इत्यनेन विभाषया यलोपे हर इह' इति स्थिते 'आद्गुणः' इति गुणे प्राप्ते 'पूर्वत्रासिद्धम्' इति यलोपस्याऽसिद्धत्वात् गुणाऽभावे 'हर इह' इति । पक्षे 'हरयिह' इत्यपि सिद्धं भवति ।

**विष्ण इह** ( ई० ४३, ५३ )—'विष्णो इह' इति दशायाम् 'एचोऽयवायावः, इत्यनेन ओकारस्य अवादेशे 'लोपः शाकल्यस्य' इति विभाषया वलोपे 'विष्ण इह' इति स्थिते 'आद्गुणः' इति गुणे प्राप्ते 'पूर्वत्रासिद्धम्' इति वलोपस्यासिद्धत्वात् गुणाऽभावे 'विष्ण इह' इति । पक्षे 'विष्णविह' इति ।

**उपैति** ( ई० ५१ )-'उप एति' इति स्थिते 'एङि पररूपम्' इति पररूपे प्राप्ते तं प्रबाध्य 'एत्येधत्यूठ्सु' इति वृद्धौ 'उपैति' इति सिद्धम् ।

प्रष्ठौहः ( ई० ४६ )—'प्रष्ठ ऊहः' इति दशायाम् 'आद्गुणः' इति गुणे प्राप्ते तं प्रबाध्य 'एत्येधत्यूठ्सु' इति वृद्धौ 'प्रष्ठौहः' इति सिद्धम् ।

स्वैरम् ( ई० ४६ )—स्वैरम् = यथेच्छम् , क्रियाविशेषणमेतत् । 'स्व ईरम्' इति स्थिते 'आद्गुणः' इति गुणे प्राप्ते 'स्वादीरेरिणोः' इति वार्तिकेन वृद्धौ उक्तं रूपं सिद्धम् ।

प्रौहः ( ई० ४८ )—'प्र ऊहः' इति स्थिते गुणं प्रबाध्य 'प्रादूहोढोढ्येषैष्येषु' इति वृद्धौ 'प्रौहः' इति ।

प्रैष्यः ( ई० ४१ )—'प्र एष्यः' इति स्थिते 'प्रादूहोढोढ्येषैष्येषु' इत्यनेन गुणं प्रबाध्य वृद्धौ 'प्रैष्यः' इति सिद्धम् ।

सुखार्तः ( ई० ४४ )—सुखेन ऋतः = सुखार्तः । 'सुख ऋतः' इति स्थिते 'ऋते च तृतीयासमासे' इत्यनेन गुणं प्रबाध्य वृद्धौ रपरत्वे 'सुखार्तः' इति सिद्धम् ।

प्रार्षभीयति ( ई० ४१, ४२, ४३, ५२, ५३ )—ऋषभमात्मन इच्छति = ऋषभीयति । 'प्र ऋषभीयति' इति स्थिते गुणं प्रबाध्य 'वा सुप्यापिशलेः' इति वृद्धौ रपरत्वे 'प्रार्षभीयति' इति । वृद्धौ सति 'अचोरहाभ्यां द्वे' इति द्वित्वं तु न, 'शरोऽचि' इति निषेधात् । वृद्ध्यभावपक्षे तु 'आद्गुणः' इति गुणे रपरत्वे 'प्रर्षभीयति' इति ।

उपोषति ( ई० ४३ )—'उप ओषति' इति स्थिते वृद्धिं प्रबाध्य 'एङि पररूपम्' इति पररूपे उक्तं रूपं सिद्धम् ।

शकन्धुः ( ई० ४७ )—शकानां देशविशेषाणाम् , अन्धुः = कूपः, शकन्धुः । 'शक अन्धुः' इति स्थिते सवर्णदीर्घे प्राप्ते तं प्रबाध्य 'शकन्ध्वादिषु पररूपं वाच्यम्' इत्यनेन पररूपे उक्तं रूपं सिद्धम् । अत्र तच्च पररूपं टेः = टिसंज्ञकस्य भवति । टिसंज्ञा च 'अचोऽन्त्यादिटि' इत्यनेन 'आद्यन्तवदेकस्मिन्' इति वचनात् ककारोत्तरवर्तिनः अकारस्य भवतीति बोध्यम् ।

कर्कन्धुः ( ई० ४९ )—'कर्क अन्धुः' इति दशायां सवर्णदीर्घं प्रबाध्य 'शकन्ध्वादिषु पररूपं वाच्यम्' इति पररूपे तत्सिद्धिः ।

पतञ्जलिः ( ई० ५२ )—'पतत् अञ्जलिः' इति स्थिते 'शकन्ध्वादिषु पररूपं वाच्यम्' इत्यनेन 'अत्' इति टेः, अकारस्य च स्थाने पररूपे अकारे जाते 'पतञ्जलिः' इति सिद्धम् ।

शिवेहि ( ई० ४२, ५१, ५३ )—'शिव आ इहि' इति दशायां 'धातूपस-

र्णयोः कार्यमन्तरङ्गम्' इत्यन्तरङ्गत्वात् सवर्णदीर्घस्याऽसिद्धत्वात् पूर्वम् 'आद्गुणः', इत्यनेन आकारेकारयोर्गुणे 'एहि' इति जाते 'शिव एहि' इति स्थिते 'अन्तादिवच्च' इत्यनेन अन्तवद्भावमादाय 'ओमाङोश्च' इति पररूपे उक्तं रूपं सिद्धम् ।

**होतृकारः** । ( ई० ४९ )—'होतृ ऋकारः' इति स्थिते अत्र 'ऋति सवर्णे ऋ वा' इति वार्तिकेन द्वयोर्ऋकारयोः स्थाने अज्भक्तिरेफद्वयवान् विलक्षणः 'ऋ' इत्येकादेशो भवति । ततश्च 'होतृकारः' इति । पक्षे तु सवर्णदीर्घे 'होतॄकारः' इति बोध्यम् ।

**गवाग्रम्** ( ई० ४५, ४९ )—'गो अग्रम्' इति स्थिते एचोऽयवायावः' इत्यवादेशं प्रबाध्य 'सर्वत्र विभाषा गोः' इति प्रकृतिभावे प्राप्ते तमपि प्रबाध्य 'अवङ् स्फोटायनस्य' इत्यनेन अग्रमित्येतद्घटकाऽकारे परे पदान्ते विद्यमानस्य एङन्तगोशब्दस्य 'अनेकाल्शित्सर्वस्ये'ति परिभाषया सम्पूर्णस्थाने अवङि प्राप्ते 'ङिच्चे'त्यनेन गकारोत्तरवर्तिनः ओकारस्य अवङि अनुबन्धलोपे 'गव अग्रम्' इति दशायाम् 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घे 'गवाग्रम्' इति ।

अवङादेशाभावपक्षे 'सर्वत्र विभाषा गोः' इति प्रकृतिभावे 'गो अग्रम्' इति । प्रकृतिभावाभावपक्षे 'एङः पदान्तादति' इति पररूपे 'गोऽग्रम्' इति ।

**गवेन्द्रः** ( ई० ५१ )—'गो इन्द्रः' इति दशायाम् 'इन्द्रे च' इत्यनेन अवङादेशे अनुबन्धलोपे 'आद्गुणः' इति गुणे 'गवेन्द्रः' इति ।

**दे३वदत्त** ( ई० ४५ )—अत्र 'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्' इत्यनेन ऋकाराभिन्नस्य अनन्त्यस्य गुरोः एकारस्य प्लुते जाते उक्तं रूपं सिद्धम् ।

**विष्णू इमौ** ( ई० ४९ )—'विष्णू इमौ' इति स्थिते यणादेशं प्रबाध्य 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इति प्रकृतिभावे 'विष्णू इमौ' इति ।

**अमी ईशाः** ( ई० ५० )—'अमी ईशाः' इति दशायां सवर्णदीर्घं प्रबाध्य 'अदसो मात्' इति अदःशब्दसम्बन्धिमकारात्परस्य ईकारस्य प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इति प्रकृतिभावे 'अमी ईशाः' इति ।

**'निपात एकाजनाङ्'**—'आङ्' वर्जित एकाच् निपात की प्रगृह्यसंज्ञा हो, अर्थात् 'आङ्' रहित एक स्वरमात्र की सन्धि नहीं हो । ईषत् ( अत्यल्प ) अर्थ में, क्रिया के योग में, मर्यादा ( सीमा ) और अभिविधि ( मर्यादा का प्रभेद व्याप्ति ) अर्थ में जो 'आ' उसे 'ङित् ( आङ्टक-आ ) और वाक्य तथा स्मरण अर्थ में जो 'आ' उसे अङित् ( केवल-आ ) जानना चाहिये । कहा भी है—

'ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः ।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित्' इति ।

प्रकृत सूत्र का उदाहरण 'इ इन्द्रः' 'उ उमेशः' इत्यादि है ।

**उ उमेशः** ( ई ५० )—'उ उमेशः' इत्यवस्थायां पूर्वस्य उकारस्य 'चादयोऽसत्त्वे' इत्यनेन निपातसंज्ञायां 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इति प्रकृतिभावे 'उ उमेशः' इति सिद्धम् ।

**इ इन्द्रः** ( ई० ४०, ४६ )—अत्र 'चादयोऽसत्त्वे' इत्यनेन प्रथमेकारस्य निपातसंज्ञायां 'निपात एकाजनाङ्' इति प्रगृह्यत्वे प्रकृतिभावः ।

**विष्णो इति** ( ई० ४१, ४२, ४४, ५२ )—'विष्णो इति' इत्यवस्थायाम् एचोऽयवायावः' इत्यनेन अवादेशे प्राप्ते तम्प्रबाध्य 'सम्बुद्धौ शाकल्यस्येतावनार्षे' इत्यनेन विभाषया प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इत्यनेन प्रकृतिभावे 'विष्णो इति' इति । प्रगृह्यत्वाऽभावपक्षे 'एचोऽयवायावः' इत्यनेन अवादेशे 'लोपः शाकल्यस्य' इत्यनेन वैकल्पिके वकारस्य लोपे 'विष्ण इति' इति स्थिते 'पूर्वत्राऽसिद्धम्' इत्यनेन वलोपशास्त्रस्य-'लोपः शाकल्यस्ये'त्यस्य असिद्धत्वात् 'आद्गुणः' इत्यनेन गुणाऽभावे 'विष्ण इति' इति । वलोपाऽभावपक्षे 'विष्णविति' इति ।

**किम्वुक्तम्** ( ई० ४३ )—'किमु उक्तम्' इति दशायां 'मय उञो वो वा' इत्यनेन मकारात् परस्य उञः उकारस्य वकारादेशे 'किम्वुक्तम्' इति । वकाराऽभावपक्षे 'निपात एकाजनाङ्' इत्यनेन प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इत्यनेन प्रकृतिभावे 'किमु उक्तम्' इति च सिद्धम् ।

**इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च'** ( ई० ४५ )—'पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या स्युर्ह्रस्वश्च वा स्यादित्यर्थः । अत्र 'इकः' इति षष्ठी । इकः पदान्तादित्यतः पदान्तादित्यनुवर्तते तच्च षष्ठयन्ततया विपरिणम्यते, अचीति चानुवर्तते । उदाहरणं तु 'चक्रि अत्र' 'चक्रयत्र' इति ।

**चक्रि अत्र** ( ई० ४९, ५१ )—'चक्री अत्र' इति स्थिते 'इको यणचि' इत्यनेन यणि प्राप्ते तं प्रबाध्य 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इति विकल्पेन ह्रस्वे कृते ह्रस्वविधिसामर्थ्यात् पुनः यणोऽप्राप्त्या 'चक्रि अत्र' इति । ह्रस्वाऽभावे यणि 'चक्रयत्र' इति च सिद्धं भवति ।

**ब्रह्मर्षिः** ( ई० ५२ )—'ब्रह्मा ऋषिः' इति दशायाम् 'आद्गुणः' इत्यनेन गुणे प्राप्ते तम्प्रबाध्य 'ऋत्यकः' इति पाक्षिके ह्रस्वे कृते ह्रस्वविधिसामर्थ्यात् पुनः

गुणस्याप्रसंगे 'ब्रह्म ऋषिः' इति । ह्रस्वाऽभावपक्षे 'आद्गुणः' इत्यनेन गुणे 'उरण् रपरः' इति रपरत्वे 'ब्रह्मर्षिः' इति सिद्धम् ।

आर्च्छत् ( ई० ३२ )—'ऋत्यकः' इति सूत्रस्य प्रत्युदाहरणमेतत् । तथाहि अत्र सूत्रे 'पदान्ताः' इत्यस्याऽग्रहणे 'आ ऋच्छत्' इति दशायाम् 'आटश्चे'ति प्राप्तवृद्धिं प्रबाध्य ह्रस्वत्वमापद्येत तन्माभूदित्येतदर्थं 'पदान्ताः' इति । तेनात्र 'आटश्चे'ति वृद्धौ सत्यां रपरत्वे कृते 'आर्च्छत्' इति सिद्ध्यति ।



# अथ हल्सन्धिप्रकरणम्

**रामष्टीकते** ( ई० ४९ )—'रामस् टीकते' इति स्थिते 'ष्टुना ष्टुः' इत्यनेन टकारयोगात् सस्य ष्टुत्वेन षत्वे 'रामष्टीकते' इति जातम् ।

**पेष्टा**—( ई० ४० )—'पेष् ता' इति स्थिते 'ष्टुना ष्टुः' इत्यनेन तकारस्य ष्टुत्वेन टकारे 'पेष्टा' इति सिद्धम् ।

**तट्टीका** ( ई० ४८, ५१ )—'तद् टीका' इति दशायां 'ष्टुना ष्टुः' इत्यनेन दस्य ष्टुत्वेन डकारे 'खरि चे'ति तस्य चर्त्वे 'तट्टीका' इति निष्पन्नम् ।

**चक्रिण्ढौकसे** ( ई० ५० )—'चक्रिन् ढौकसे' इति स्थिते टवर्गयोगात् नस्य ष्टुत्वेन णत्वम् ।

**षण्णाम्** ( ई० ५२ )—'षष् नाम्' इति स्थिते 'स्वादिष्वि'ति पदत्वात् षस्य जश्त्वेन डकारे 'प्रत्यये भाषायां नित्यम्' इति तस्य णकारे 'षण् नाम्' इति जाते टवर्गयोगात् नकारस्य 'ष्टुना ष्टुः' इति ष्टुत्वेन णकारे 'षण्णाम्' इति सिद्धम् । 'न पदान्तादि'ति ष्टुत्वनिषेधस्तु न, 'अनाम्नवतिनगरीणामिति वाच्यम्' इति वार्तिकेन तत्र अनामिति पर्युदासात् ।

**वागीशः** ( ई० ४९ )—'वाक् ईशः' इति स्थिते 'झलां जशोऽन्ते' इत्यनेन ककारस्य जश्त्वे 'वागीशः' इति सिद्धम् ।

**चिद्रूपम्** ( ई० ५० ) 'चित् रूपम्' इति स्थिते 'झलां जशोन्ते' इति जश्त्वे 'चिद्रूपम्' इति ।

**एतन्मुरारिः** ( ई० ५० )—एष चासौ मुरारिः 'एतन्मुरारिः' । 'एतद् मुरारिः' इति स्थिते 'यरोऽनुनासिकेऽनुनासिको वा' इत्यनेन दस्यानुनासिके नकारे 'एतन्मुरारिः' इति । पक्षे 'एतद्मुरारिः' इति च भवति ।

तल्लयः ( ई० ४९ )—तस्य लयः 'तल्लयः' । 'तद् लयः' इति स्थिते 'तोर्लिः' इति सूत्रेण दस्य परसवर्णे 'तल्लयः' इति सिद्धम् । (अत्र दस्य परसवर्णः=परनिमित्त-भूतलकारसवर्णो भवति, स च लकार एव, अन्यस्य तत्सवर्णस्याऽभावात् )

विद्वाँल्लिखति (ई० ४३)—'विद्वान् लिखति' इत्यत्र 'तोर्लि' इत्यनेन नकारस्य स्थानिनोऽनुनासिकस्य परसवर्णो लकारो भवन्नान्तर्यादनुनासिक एव भवतीति ।

तस्मादित्युत्तरस्य ( ई० ३३ )— पञ्चमीनिर्देशेन विधीयमानं कार्यं वर्णान्त-रेणाऽव्यवहितस्य परस्य ज्ञेयम्' इति सूत्रार्थः । भाषार्थ–'पञ्चम्यन्त पदका उच्चारण कर जिस कार्यका विधान किया गया हो, वह कार्य उस पञ्चम्यन्तसे बोधित वर्णान्तर ( अन्यवर्ण ) से अव्यवहित ( व्यवधानरहित ) पर वर्णके स्थान में हो । अर्थात् निमित्त और स्थानीके बीचमें अन्य वर्णको नहीं आना चाहिये । उदाहरण—'उदः स्थास्तम्भोः पूर्वस्य' इस सूत्रमें 'उदः' इस पञ्चम्यन्त पदका उच्चारण कर पूर्व-सवर्ण आदेशका विधान किया गया है अतः यह सूत्र 'उद्' तथा 'स्था' और 'स्तम्भ' के बीच में जब अन्य कोई कर्ण नहीं होगा तब ही पूर्वसवर्ण कर सकेगा । यथा—'उत्थानम् , उत्तम्भनम् , इत्यादि स्थलमें देखें ।

आदेः परस्य—(ई० ३४) 'परस्य यद्विहितं तत्तस्यादेर्बोध्यम्' इति सूत्रार्थः । भाषार्थ–'जो कार्य पर के स्थानमें विधान किया गया हो, वह कार्य परके आदि वर्णके स्थानमें होता है, ऐसा समझना चाहिये । उदाहरण 'उत्थानम्' 'उत्तम्भनम्' यहां 'उद् स्थानम्' और 'उद् स्तम्भनम्' इस स्थितिमें परके आदि वर्ण सकारके स्थानमें पूर्व दकारका सवर्ण थकार होता है ।

उत्थानम् ( ई० ४१, ४३, ५१, ५२ )—'उद् स्थानम्' इति दशायाम् 'उदः स्थास्तम्भोः पूर्वस्य' इति सूत्रेण 'तस्मादित्युत्तरस्ये'ति परिभाषया वर्णान्तराऽव्य-वहितस्य 'स्था' इत्यस्य स्थाने पूर्वसवर्णे प्राप्ते 'आदेः परस्ये'ति सूत्रबलात् 'स्था' इत्य-स्यादिभूतस्य सकारस्य स्थाने अघोषमहाप्राणप्रयत्नसाम्यात् तादृशे थकारे पूर्वस-वर्णे कृते 'उद् थ् थानम्' इति जाते 'झरो झरि सवर्णे' इति दकारोत्तरवर्तिथकारस्य विकल्पेन लोपे 'खरि च' इत्यनेन दकारस्य चर्त्वे 'उत्थानम्' इति । लोपाभावपक्षे 'उत्थ्थानम्' इति च भवति । विकल्पपक्षे 'खरि चे'ति चर्त्वन्तु न, चर्त्वं प्रति थका-रस्याऽसिद्धत्वात् ।

वाग्घरिः ( ई० ४६ )—'वाक् हरिः' इति स्थिते 'झलां जशोन्ते' इति जश्त्वे

कृते 'वाग् हरिः' इति दशायाम् 'झयो होऽन्यतरस्याम्' इति पूर्वसवर्णविधौ गकारस्य पूर्वनिमित्तत्वात् तत्सवर्णेषु 'क-ख-ग-घ-ङ' इत्येतेषु पञ्चस्वपि प्राप्तेषु घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य स्थाने तादृशे घकारे जाते 'वाग्घरिः' इति सिद्धम् । पूर्वसवर्णाऽभावपक्षे 'वाग्हरिः' इति सिद्धं भवति ।

**तच्छिवः** ( ई० ४३ )—'तद् शिवः' इत्यवस्थायां 'स्तोःश्चुना श्चुः' इत्यनेन दकारस्य श्चुत्वे जकारे कृते 'खरि च' इत्यनेन जकारस्य चर्त्वेन चकारे 'तच् शिवः' इति जाते 'शश्छोऽटि' इत्यनेन झयन्तःपातिनश्चकारात्परस्य शस्य अट्प्रत्याहारान्तःपातिनि शकारोत्तरवर्तिनीकारे परे छत्वे 'तच्छिवः' इति सिद्धम् । छत्वाभावे तु 'तच्शिवः' इति ।

**अञ्चितः** ( ई० ५० )—'अन्चु गतिपूजनयोः' नोपधः, तस्मात् क्तः । 'अन्चेः पूजायाम्' इति इट् । 'नान्चेः पूजायाम्' इति निषेधात् 'अनिदिताम्—' इति न लोपो न । अत्र 'नश्चापदान्तस्ये'त्यनुस्वारस्य 'अनुस्वारस्य ययि परसवर्णः' इति परसवर्णो ञकारः ।

**षट्त्सन्तः** ( ई० ४२, ४६, ५२ )—'षड् सन्तः' इति स्थिते 'डः सि धुट्' इत्यनेन 'आद्यन्तौ टकितौ' इति सहकारात् डकारात्परस्यादौ धुटि अनुबन्धलोपे 'षड् ध् सन्तः' इति स्थिते 'खरि च' इति धस्य चर्त्वे कृते पुनः डकारस्याप्यनेन चर्त्वे 'षट्त्सन्तः' इति । धुडभावपक्षे डकारस्य चर्त्वे 'षट्सन्तः' इति ।

**प्राङ्क्षष्ठः** ( ई० ४७, ४९, ५२ )—'प्राङ् षष्ठः' इति स्थिते 'ङ्णोः कुक्टुक् शरि' इति ङकारस्य कुकि 'आद्यन्तौ टकितौ' इत्यनेन ङकाराऽन्ते जाते अनुबन्धलोपे 'प्राङ् क् षष्ठः' इति स्थिते 'चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्' इति वार्तिकेन ककारस्य द्वितीयाक्षरे खकारे 'प्राङ्ख्षष्ठः' इति । द्वितीयाक्षराभावे कषयोः संयोगे 'प्राङ्क्षष्ठः' इति । कुकागमाभावे 'प्राङ्षष्ठः' इति ।

**सञ्च्छम्भुः** ( ई० ५०, ५२ )—'सन् शम्भुः' इति स्थिते 'शि तुक्' इत्यनेन 'आद्यन्तौ टकितौ' इति सूत्रसहकारात् शकारे परे पदान्तस्य नस्याऽन्तावयवे तुकि अनुबन्धलोपे 'सन् त् शम्भुः' इति स्थिते 'शश्छोऽटि' इति शस्य छत्वे 'स्तोः श्चुना श्चुः' इति तस्य श्चुत्वेन चत्वे 'सन् च् छम्भुः' इति जाते पुनः 'स्तोः श्चुना श्चुः' इत्यनेन नस्य श्चुत्वेन ञत्वे 'झरो झरि सवर्णे' इति वैकल्पिके चलोपे 'सञ्छम्भुः' इति । चलोपाभावपक्षे 'सञ्च्छम्भुः' इति । छत्वाऽभावपक्षे 'सञ्च्

शम्भुः' इति । तुगभावपक्षे 'सन् शम्भुः' इति स्थिते नस्य श्चुत्वेन ञकारे 'सञ् शम्भुः' इति । तदुक्तम्—

'अञ्छौ अञ्चछा अञ्चशा अञशाविति चतुष्टयम् ।
रूपाणामिह तुक्-छत्व-चलोपानां विकल्पनात् ॥

**सन्नच्युतः** ( ई० ५० )—'सन् अच्युतः' इति दशायां 'ङमो ह्रस्वादचि ङमुण् नित्यम्' इति ह्रस्वात्परस्य ङम्प्रत्याहारान्तःपातिनो नकारात् परस्य अच्प्रत्याहारान्तर्वर्तिनोऽकारस्य ङमुटि अनुबन्धलोपे' सन्नच्युतः' इति ।

**संस्कर्ता** ( ई० ४३, ४४, ४८, ५२ )—'सम् कर्ता' इति दशायां 'सम्परिभ्यां करोतौ भूषणे' इति सुटि अनुबन्धलोपे 'सम् स्कर्ता' इति स्थिते 'समः सुटि' इति सूत्रेण सुट्सम्बन्धिसकारे परे समो मस्य रुत्वे अनुबन्धलोपे 'सर् स्कर्ता' इति जाते 'अत्राऽनुनासिकः पूर्वस्य तु वा' इति रोः पूर्वमनुनासिके 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे 'विसर्जनीयस्य सः' इति विसर्गस्य सत्वे प्राप्ते तम्प्रबाध्य 'वा शरि' इति विसर्गस्य विसर्गे प्राप्ते तमपि प्रबाध्य 'सम्पुंकानां सो वक्तव्यः' इति विसर्गस्य सत्वे 'सँस्कर्ता' इति । अनुनासिकाऽभावपक्षे 'अनुनासिकात्परोऽनुस्वारः' इत्यनुस्वारे 'संस्कर्ता' इति ।

**पुंस्कोकिलः** ( ई० ४८, ५० )—'पुम् कोकिलः' इति दशायां 'पुमः खय्यम्परे' इत्यनेन पुमो मस्य रुत्वे अनुबन्धलोपे 'अत्रानुनासिकः पूर्वस्य तु वा' इति सूत्रेण अनुनासिके 'पुँर् कोकिलः' इति स्थिते 'खरवसानयोर्विसर्जनीयः' इत्यनेन रेफस्य विसर्गे 'कुप्वोः ≍क≍पौ च' इत्यनेन जिह्वामूलीये प्राप्ते तम्प्रबाध्य 'सम्पुंकानां सो वक्तव्यः' इति वार्तिकेन विसर्गस्य सत्वे 'पुँस्कोकिलः' इति । अनुनासिकाभावपक्षे 'अनुनासिकात्परोऽनुस्वारः' इत्यनुस्वारे कृते 'पुंस्कोकिलः' इति ( शेषं पूर्ववत् ) ।

**चक्रिंस्त्रायस्व** ( ई० ४१, ४६ )—'चक्रिन् त्रायस्व' इत्यवस्थायां 'नश्छव्यप्रशान्' इति सूत्रेण नस्य रुत्वे अनुबन्धलोपे 'अत्रानुनासिकः पूर्वस्य तु वा' इत्यनेन अनुनासिके 'चक्रिँर् त्रायस्व' इति जाते 'खरवसानयोर्विसर्जनीयः' इत्यनेन रेफस्य विसर्गे 'विसर्जनीयस्य सः' इत्यनेन विसर्गस्य सत्वे 'चक्रिँस्त्रायस्व' इति । अनुनासिकाऽभावपक्षे 'अनुनासिकात्परोऽनुस्वारः' इति अनुस्वारे चक्रिंस्त्रायस्व' इति ( शेषं कार्यं पूर्ववत् ) ।

**नॄन् पाहि** ( ई० ३५ )—'नॄन् पाहि' इत्यवस्थायां 'नॄन् पे' इति नस्य रुत्वे अनुबन्धलोपे 'अत्रानुनासिकः पूर्वस्य तु वा' इत्यनेन अनुनासिके 'खरवसानयोर्वि-

सर्जनीयः' इत्यनेन रेफस्य विसर्गे कृते 'विसर्जनीयस्य सः' इति विसर्गस्य सत्वे प्राप्ते तम्प्रबाध्य 'कुप्वोः≍क≍पौ च' इत्युपध्मानीये कृते नॄँ≍पाहि' इति । अनुनासिकाभावपक्षे 'अनुनासिकात्परोऽनुस्वारः' इत्यनेन अनुस्वारे कृते 'नॄं≍पाहि' इति, उपध्मानीयाभावपक्षे रुत्वानुनासिकविसर्गेषु कृतेषु 'नॄँः पाहि' इति, अनुनासिकाभावपक्षे अनुस्वारे कृते 'नॄंःपाहि' इति, रुत्वाऽभावपक्षे तु 'नॄन् पाहि' इति पञ्चरूपाणि भवन्ति ।

**कांस्कान्** ( ई० ४४, ४७ )—'कान् कान्' इति दशायां 'तस्य परमाम्रेडितम्' इत्यनेन परस्य 'कान्' इत्यस्याम्रेडितसंज्ञायां 'कानाम्रेडिते' इत्यनेन आम्रेडितसंज्ञके परे पूर्वस्य 'कान्' इत्यस्य नकारस्य रुत्वे अनुबन्धलोपे 'अत्राऽनुनासिकः पूर्वस्य तु वा' इत्यनेन नस्यानुनासिके 'खरवसानयोर्विसर्जनीयः' इत्यनेन रेफस्य विसर्गे 'सम्पुंकानां सो वक्तव्यः' इति सत्वे 'काँस्कान्' इति । पक्षे अनुस्वारे 'कांस्कान्' इति ।

**पयस्पाशम्** ( ई० ५१ )—'याप्ये पाशप्' कुत्सितं पय इत्यर्थः । पयः पाशम्' इति स्थिते 'सोऽपदादौ' इत्यनेन विसर्गस्य सत्वे उक्तं रूपं सिद्धम् ।

**सर्पिष्पाशम्** ( ई० ४५ )—'याप्ये पाशप्' कुत्सितं सर्पिरित्यर्थः । 'सर्पिः पाशम्' इति स्थिते 'सोपदादौ' इति विसर्गस्य सत्वे प्राप्ते तं प्रबाध्य 'इणः षः' इति इण उत्तरस्य रुसम्बन्धिनो विसर्गस्य षत्वे उक्तं रूपं सिद्धम् ।

**सर्पिष्कल्पम्** ( ई० ५० )—'ईषदसमाप्तौ कल्पप्' 'सर्पिः कल्पम्' इति स्थिते सत्वं प्रबाध्य 'इणः षः' इत्यनेन इण उत्तरस्य रुसम्बन्धिनो विसर्गस्य षत्वे 'सर्पिष्कल्पम्' इति ।

**सर्पिष्कम्** ( ई० ५२ )—'अज्ञाते' 'कुत्सिते' इति वा कः । अत्र 'सोऽपदादौ' इति प्राप्तसत्वं प्रबाध्य 'इणः षः' इत्यनेन षत्वे उक्तं रूपं जातम् ।

**कस्कः** ( ई० ४२, ५० )—वीप्सायां द्वित्वे पूर्वखण्डे अकारात् परस्य विसर्गस्य 'कस्कादिषु च' इत्यनेन सत्वे 'कस्कः' इति । षत्वन्तु न 'कस्कादिषु च' इत्यनेन इणः परस्यैव विसर्गस्य षत्वविधानात् ।

**आविष्कृतम्** ( ई० ५३ )—प्रकाशीकृतमित्यर्थः । आविः कृतमिति स्थिते 'इदुदुपधस्य चाऽप्रत्ययस्य' इत्यनेन इकारोपधस्य विसर्गस्य षत्वे उक्तं रूपं सिद्धम् ।

**स्वच्छाया** ( ई० ४१)—'स्व छाया' इति दशायां 'छे च' इति तुकि अनुबन्धलोपे 'स्व त् छाया' इति जाते 'झलां जशोऽन्ते' इति जश्त्वेन तकारस्य दकारे 'स्तोः श्चुनाश्चुः' इति दस्य श्चुत्वेन जकारे 'खरि च' इति जस्य चर्त्वे 'स्वच्छाया' इति ।

लक्ष्मीच्छाया ( ई० ५० )—'लक्ष्मी छाया' इति दशायां 'पदान्ताद्वा' इति तुकि अनुबन्धलोपे 'लक्ष्मी त् छाया' इति स्थिते 'झलां जशोऽन्ते' इति तकारस्य जश्त्वेन दकारे 'स्तोः श्चुनाश्चुः' इति दस्य श्चुत्वेन जकारे 'खरि च' इति जस्य चर्त्वेन चकारे 'लक्ष्मीच्छाया' इति । तुगभावे 'लक्ष्मीछाया' इत्यपि भवति ।

इति हल्सन्धिप्रकरणम् ।



# अथ विसर्गसन्धिप्रकरणम्

हरिः शेते ( ई० ५० )—'हरिः शेते' इति स्थिते 'वा शरि' इत्यनेन विसर्गस्य विसर्गे 'हरिः शेते' इति विसर्गाऽभावपक्षे तु 'विसर्जनीयस्य सः' इति विसर्गस्य सत्वे 'स्तोः श्चुना श्चुः' इति सस्य श्चुत्वेन शकारे 'हरिश्शेते' इति भवति ।

हरिः स्फुरति ( ई० ४३, ४६, ४६, ५०, ५२ )—'हरिः स्फुरति' इति स्थिते 'खर्परे शरि वा विसर्गलोपो वक्तव्यः' इति वार्तिकेन विसर्गस्य लोपे 'हरि स्फुरति' इति । 'लोपाऽभावे 'वा शरि' इति विसर्गस्य विसर्गे 'हरिः स्फुरति' इति । विसर्गाऽभावपक्षे 'विसर्जनीयस्य सः' इति विसर्गस्य सत्वे 'हरिस्स्फुरति' इति च तृतीयं रूपं सिद्धं भवति ।

इति विसर्गसन्धिप्रकरणम् ।



# अथ स्वादिसन्धिप्रकरणम्

शिवोऽर्च्यः ( ई० ४०, ४८, ४६ )—'शिवस् अर्च्यः' इति स्थिते 'ससजुषो रुः' इति रुत्वे 'अतो रोरप्लुतादप्लुते' इति उत्वे 'शिव उ अर्च्यः' इति जाते 'आद्गुणः' इति गुणे 'एङः पदन्तादति' इति पूर्वरूपे 'शिवोऽर्च्यः' इति ।

देवा इह ( ई० ४६, ५० )—'देवास् इह' इति दशायां 'ससजुषो रुः' इति रुत्वे 'भोभगोअघोअपूर्वस्य योऽशि' इति रोर्यादेशे 'लोपः शाकल्यस्य' इति यलोपे 'देवा इह' इति यलोपाभावे 'देवायिह' इति ।

भो देवा ( ई० ५१ )—'भोस् देवाः' इति दशायां 'ससजुषो रुः' इति रुत्वे 'भोभगोअघोअपूर्वस्य योऽशि' इति यत्वे 'हलि सर्वेषाम्' इति यलोपे 'भो देवा' इति । अत्र 'भोस्' इति सकारान्तनिपातमव्ययम् ।

**अहर्गणः** ( ई० ५० )—'अहन् गणः' इति स्थिते 'रोऽसुपि' इति 'अलोन्त्यस्ये'ति परिभाषया अहन्शब्दान्तस्य नस्य रेफादेशे 'अहर्गणः' इति सिद्धम् ।

**भो अच्युत** ( ई० ५२ )—'भोस्' इति सकारान्तनिपातसम्बोधनम् अव्ययपदम् । तत्र 'भोस् अच्युत' इति स्थिते 'ससजुषो रुः' इति सस्य रुत्वे 'भोभगो–' इति तस्य यत्वे च कृते 'व्योर्लघुप्रयत्नतरः शाकटायनस्य' इत्यनेन यकारस्य विभाषया लघुच्चारणयादेशे 'भोयच्युत' इति । विकल्पपक्षे 'भो य् अच्युत' इति दशायाम् 'ओतो गार्ग्यस्य' इत्यनेन अलघुप्रयत्नस्य यस्य लोपे 'भो अच्युत' इत्युक्तं रूपं सिद्धम् ।

**अहरहः** ( ई० ४८ )—'नित्यवीप्सयोः' इति द्वित्वम् । 'अहन् अहन्' इति स्थिते 'न लुमते'ति निषेधात् सुपरकत्वाभावेन 'रोऽसुपि' इति रुत्वे अन्त्यरेफस्य विसर्गे उक्तं रूपं सिद्धम् । 'अहन्नि'ति रुत्वे तु 'अतोरो'ति उत्वं स्यात् ।

**अहो रूपम्** ( ई० ४५ )—अह्नो रूपमिति विग्रहः । 'अहन् रूपम्' इति स्थिते 'रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्' इति रुत्वे 'हशि च' इत्युत्वे 'आद्गुणः' इति गुणे उक्तं रूपं निष्पन्नम् ।

**अहो रात्रः** ( ई० ५३ )—अहश्च रात्रिश्चेति द्वन्द्वे समासान्ते अचि 'यस्येति चे'ति इकारलोपे 'अहन् रात्र' इति जाते 'रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्' इति नस्य रुत्वे 'हशि च' इत्युत्वे 'आद्गुणः' इति गुणे 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे उक्तं रूपं सिद्धम् ।

अत्र नकारस्य रात्रिशब्दपरकत्वाभावात् कथं रुत्वमिति चेन्न, एकदेशविकृतन्यायेन तत्सिद्धेः ।

**पुनारमते** ( ई० ४७, ५० ) 'पुनर् रमते' इति दशायां 'रो रि' इति रेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति नकारादकारस्य दीर्घे 'पुना रमते' इति ।

**हरी रम्यः** ( ई० ४४, ४८, ५२ )— 'हरिस् रम्यः' इति स्थिते 'ससजुषो रुः' इति सस्य रुत्वे 'रो रि' इति रेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे 'हरी रम्यः' इति ।

**शम्भू राजते** ( ई० ५१ )—'शम्भु स् राजते' इति दशायां 'ससजुषो रुः' इति रुत्वे 'रो रि' इति रुसम्बन्धिरेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे 'शम्भू राजते' इति ।

**तृढः**—'ढ्रलोपे'ति सूत्रे अण्ग्रहणाभावे 'ढरेफयोर्लोपनिमित्तयोः पूर्वस्य दीर्घः'

इत्यर्थे तृह्धातोर्निष्ठायां क्तप्रत्यये 'तृह् त' इति स्थिते 'हो ढः' इति हस्य ढत्वे 'झष-स्तथोः' इति तस्य धत्वे ष्टुत्वे 'ढो ढे लोपः' इति ढलोपे सति 'ढ्रलोपे' इति पूर्वस्य ऋकारस्य दीर्घापत्तिः स्यादिति सूत्रे अण्ग्रहणमावश्यकमिति । कृते त्वण्ग्रहणे तत्सामर्थ्यात् पूर्वणकारेणैव 'अण्' प्रत्याहारग्रहणात् दीर्घाऽप्रवृत्त्या कृदन्तत्वात् सौ रुत्वे विसर्गे 'तृढः' इति ।

**मनोरथः** ( ई० ४१, ४७, ४९, ५२ )—'मनस् रथः' इति दशायां 'ससजुषो रुः' इति सस्य रुत्वे 'हशि च' इति रोरुत्वे प्राप्ते 'रो रि' इति रेफस्य लोपे च प्राप्ते 'विप्रतिषेधे परं कार्यम्' इति तुल्यबलविरोधे सति परत्वात् 'रो रि' इति लोपे प्राप्ते 'पूर्वत्राऽसिद्धम्' इत्याधिकारसूत्रेण सपादसप्ताध्यायीस्थ 'हशि चे'ति सूत्रदृष्ट्या त्रैपादिकस्य 'रो रि' इति सूत्रस्याऽसिद्धत्वात् 'हशि चे'त्यनेन रोरुत्वे 'मन उ रथः' इति जाते 'आद्गुणः' इति गुणे 'मनोरथः' इति ।

**एष विष्णुः** ( ई० ५० )—'एष स् विष्णुः' इत्यवस्थायां रुत्वं प्रबाध्य 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इति सुलोपे 'एष विष्णुः' इति ।

**स शम्भुः** ( ई० ४१ )—'सस् शम्भुः' इति स्थिते रुत्वं प्रबाध्य 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इति सुलोपे 'स शम्भुः' इति ।

**एषको रुद्रः** ( ई० ४३ ) 'एतत्तदोः' इति सूत्रे 'अकोः' किमित्यस्य प्रत्युदाहरणमेतत् । तत्र हि 'एषक स् रुद्रः' इत्यवस्थायाम् एतच्छब्दस्य सककारकत्वात् सुलोपाऽभावे 'ससजुषो रुः' इति रुत्वे 'हशि चे'त्युत्वे 'आद्गुणः इति गुणे 'एषको रुद्रः' इति भवति । अकोरित्यस्याऽभावे तु अत्राऽपि सुलोपापत्तिः स्यादिति सूत्रे तद्ग्रहणमावश्यकम् ।

**सैषः**—'स स् एषः' इति स्थिते 'सोऽचिलोपे चेत्पादपूरणम्' इति सुलोपाऽभावे 'सैष(१) दाशरथी रामः' इत्यत्र पादो न पूर्यते अतोऽत्रानेन सुलोपे 'वृद्धिरेऽचि' इति वृद्धौ 'सैषः' इति भवति । अन्यत्र तु 'सस् एषः' इति स्थिते रुत्वे यत्वे यलोपे 'स एषः' इति भवति ।

इति स्वादिसन्धिप्रकरणम् ।



---

( १ ) सैष दासरथी रामः सैष राजा युधिष्ठिरः ।
सैष कर्णो महात्यागी सैष भीमो महाबलः ॥ इति श्लोकः ।

# अथ अजन्तपुँल्लिङ्गप्रकरणम्

रामः ( ई० ४५ )—रामशब्दात् प्रथमाविभक्तेरेकवचने सुप्रत्यये सति उकारस्य इत्संज्ञायां लोपे च कृते सस्य 'ससजुषो रुः' इति रुत्वे रेफस्य 'खरवसानयोर्विसर्जनीयः' इति विसर्गे 'रामः' इति ।

अत्र रमन्ते योगिनोऽस्मिन्निति विग्रहे तु 'हलश्चे'त्यधिकरणे घञ् । 'कृत्तद्धिते'ति प्रातिपदिकत्वम् । यदि तु—अव्युत्पन्नः, संज्ञाशब्दो वा रामशब्दस्तदा 'अर्थवदि'ति प्रातिपदिकत्वं वोध्यम् । तथा च श्रुतिः—

रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परं ब्रह्माभिधीयते ॥ इति ।

रामान् ( ई० ४०, ५२, ५३ )—रामशब्दात् द्वितीयावहुवचने शसि 'लशक्वतद्धिते' इति शस्येत्संज्ञायां लोपे च कृते 'राम अस्' इति स्थिते 'प्रथमयोः पूर्वसवर्णः' इति दीर्घे 'तस्माच्छसो नः पुंसि' इति सस्य नत्वे कृते 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति नस्य णत्वे प्राप्ते 'पदान्तस्य' इति तन्निषेधे 'रामान्' इति सिद्धम् ।

स्थानिवदादेशोऽनल्विधौ ( ई० ४५ )—'आदेशः स्थानिवत् स्यात् न तु स्थान्यलाश्रयविधौ' इति वृत्तिः । येन विधीयमानेन अन्यत्प्रसक्तं निवर्तते स आदेशः, यस्य स्थाने अन्यद्विधीयते तत् स्थानि । स्थानिना तुल्यः स्थानिवत् । आदेशः स्थानिना तुल्यो भवति, स्थानिधर्मको भवतीति यावत् । अलिति वर्णपर्यायः । विधीयत इति विधिः = कार्यम् । अलाश्रयो विधिः अल्विधिः । न अल्विधिः अनल्विधिः । 'अलाश्रयकार्ये कर्तव्ये स्थानिवन्न भवतीति' फलितार्थः । उदाहरणन्तु 'रामाय' इति । अत्र ङेर्यादेशे कृते स्थानिवद्भावेन सुप्त्वमादाय 'सुपिचे'ति दीर्घो भवति ।

रामाय ( ई० ५१ )—रामशब्दात् चतुर्थ्येकवचने ङेविभक्तौ 'ङेर्यः' इति ङेर्यादेशे 'राम य' इति स्थिते 'स्थानिवदादेशोऽनल्विधौ' इति स्थानिवद्भावेन सुप्त्वमादाय 'सुपि च' इति मकारोत्तरवर्तिनोऽकारस्य दीर्घे 'रामाय' इति सिद्धम् ।

रामेभ्यः ( ई० ४८ ) रामशब्दात् भ्यसि 'वहुवचने झल्येत्' इति एत्वे सस्य रुत्वे विसर्गे 'रामेभ्यः' इति ।

रामाणाम् (ई० ४७) रामशब्दात् षष्ठीवहुवचने आमि 'राम आम्' इति स्थिते 'ह्रस्वनद्यापो नुट्' इति नुटि अनुवन्धलोपे 'नामि' इति दीर्घे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति नस्य णत्वे उक्तं रूपं सिद्धम् ।

रामेषु (ई० ५०)—रामशब्दात् सुपि 'राम सु' इति स्थिते 'बहुवचने झल्येत्' इत्येत्वे 'आदेशप्रत्यययोः' इति षत्वे 'रामेषु' इति ।

सर्वस्मात् ( ई० ४८ )—सर्वशब्दात् ङसि विभक्तौ 'सर्वादीनि सर्वनामानि' इति सर्वनामसंज्ञायां 'ङसिङ्योः स्मात्स्मिनौ' इति ङसेः स्मादादेशे उक्तं रूपं सिद्धम् ।

सर्वेषाम् ( ई० ५०, ५२ )—सर्वशब्दात् षष्ठीबहुवचने आमि 'सर्व आम्' इति स्थिते 'आमि सर्वनाम्नः सुट्' इति सुटि अनुबन्धलोपे 'बहुवचने झल्येत्' इति वकारोत्तरवर्तिनोऽकारस्य एत्वे 'आदेशप्रत्यययोः' इति षत्वे 'सर्वेषाम्' इति जातम् ।

पूर्वे ( ई० ४४, ५१ )—पूर्वशब्दात् जसि 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' इति वा सर्वनामसंज्ञायां 'जसः शी' इति जसः श्यादेशे 'आद्गुणः' इति गुणे 'पूर्वे' इति । पक्षे पूर्वसवर्णदीर्घे सस्य रुत्वे विसर्गे च 'पूर्वाः' इति भवति ।

अतिसर्वाय ( ई० ४१ )—अतिक्रान्तः सर्वमतिसर्वः तस्मै 'अतिसर्वाय' इति । अत्र 'अन्यविशेषणत्वेन 'स्वार्थोपस्थापकत्वमुपसर्जनत्वमि'त्युपसर्जनलक्षणसत्त्वेन सर्वशब्दस्य समासे उपसर्जनीभूतत्वात् 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इति निषेधात् सर्वनामसंज्ञाऽभावेन स्मायादेशाऽप्राप्त्या 'ङेर्यः' इति ङेर्यादेशे 'सुपि चे'ति दीर्घे 'अतिसर्वाय' इति सिद्धम् ।

ननु प्रतिपदोक्तपरिभाषया अतिसर्वशब्दस्य कथं सर्वनामसंज्ञाप्राप्तिरिति चेन्न, एवं सति 'वर्णाश्रमेतराणाम्' इत्यादौ वर्णाश्रमेतरशब्दस्याऽपि सर्वनामत्वाऽभावादेव सुटोऽप्राप्त्या 'द्वन्द्वे चे'ति सूत्रं व्यर्थं स्यात्, तदेव व्यर्थीभूय ज्ञापयति 'तदन्तस्यापीयं संज्ञेति' दिक् ।

मासपूर्वाय ( ई० ४६ )—मासेन पूर्वाय इति विग्रहः । अत्र 'तृतीयासमासे' इति सूत्रेण सर्वनामसंज्ञानिषेधात् स्मायादेशाऽप्राप्त्या 'ङेर्यः' इति ङेर्यादेशे 'सुपि चे'ति दीर्घे 'मासपूर्वाय' इति सिद्धम् ।

अत्राऽपि 'द्वन्द्वे चे'ति ज्ञापकात् तदन्तस्य ( मासपूर्वशब्दस्य ) सर्वनामसंज्ञा प्राप्तेत्यवसेयम् ।

निर्जरसौ—निर्जरशब्दात् औविभक्तौ 'जराया जरसन्यतरस्याम्' इति जरसादेशे 'निर्जरसौ' इति । नच जराशब्दस्य विधीयमानो जरसादेशः निर्जरशब्दे कथमिति वाच्यम्, जरसादेशस्य अङ्गाधिकारस्थत्वेन 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इति परिभाषया निर्जरशब्दस्याऽपि जरसादेशोचितत्वात् । नन्वेवमपि

जराशब्दान्तस्य विधीयमानो जरसादेशः अनेकाल्त्वात् निर्जरशब्दस्य कृत्स्नस्यैव स्यादिति चेन्न, 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषायाः जागरूकत्वात् । नचैवमपि निर्जरशब्दस्य जराशब्दान्तत्वं कथमिति वाच्यम्, 'एकदेशविकृतमनन्यवत्' इति परिभाषया अर्थात् 'छिन्ने पुच्छेऽपि श्वा श्वैव, नाऽश्वो नच गर्दभः' इति न्यायेन निर्जरशब्देऽपि जराशब्दान्तत्वस्य सुलभत्वात् । जरसादेशाभावपक्षे तु 'वृद्धिरेऽचि' इति वृद्धौ 'निर्जरौ' इति ।

## निर्जरशब्दस्य रूपाणि ( ई० ३५ )—

| | | |
|---|---|---|
| निर्जरः | निर्जरसौ, निर्जरौ | निर्जरसः, निर्जराः |
| निर्जरसम्, निर्जरम् | निर्जरसौ, निर्जरौ | निर्जरसः, निर्जरान् |
| निर्जरसा, निर्जरेण | निर्जराभ्याम् | निर्जरैः |
| निर्जरसे, निर्जराय | " | निर्जरेभ्यः |
| निर्जरसः, निर्जरात्–द् | " | " |
| निर्जरसः, निर्जरस्य | निर्जरसोः, निर्जरयोः | निर्जरसाम्, निर्जराणाम् |
| निर्जरसि, निर्जरे | " " | निर्जरेषु |
| हे निर्जर | हे निर्जरसौ, निर्जरौ | हे निर्जरसः, निर्जराः |

**पदः** ( ई० ४५ )—पादशब्दाच्छसि 'पद्दन्नोमास–' इति पादशब्दस्य विभाषया पदादेशे सस्य रुत्वे विसर्गे 'पदः' इति । पक्षे पूर्वसवर्णदीर्घे 'तस्माच्छसोनः–' इति नत्वे 'पदान्' इति ।

**पदा** ( ई० ४२ )—पादशब्दस्य तृतीयैकवचने 'पद्दन–' इति पदादेशे 'पदा' इति । पक्षे 'टाङसिङसाम्–' इति इनादेशे 'आद्गुणः' इति गुणे 'पादेन' इति ।

**विश्वपः** ( ई० ४३, ५०, ५२ )—विश्वपाशब्दात् द्वितीयाबहुवचने 'विश्वपा अस्' इति स्थिते 'स्वादिष्वि'ति सर्वनामस्थानभिन्नस्वादिषु शसादिषु परेषु पूर्वस्य विश्वपाशब्दस्य पदसंज्ञायां 'यचि भम्' इत्यनेन सर्वनामस्थानभिन्नयजादिषु स्वादिषु परेषु भसंज्ञायां च प्राप्तायां किमत्र विधेयम् इति शङ्कायाम् 'आकडारादेका संज्ञा' इत्यनेन एकैव संज्ञा भवतीति नियमात् परत्वादनवकाशत्वाच्च भसंज्ञायां सत्याम् 'आतो धातोः' इत्यनेन पूर्वसवर्णदीर्घं प्रबाध्य 'अलोन्त्य'परिभाषया पकारोत्तरवर्त्याकारस्य लोपे सस्य रुत्वे विसर्गे 'विश्वपः' इति ।

हरिणा—हरिशब्दात्तृतीयैकवचने 'शेषोध्यसखि' इति घिसंज्ञायाम् 'आङो नाऽस्त्रियाम्' इति नादेशे 'अट्कुप्वाङ्–' इति णत्वे 'हरिणा' इति ।

सखा ( ई० ४१, ५१, ५३ )—सखिशब्दात् प्रथमैकवचने सौ 'यस्मात्प्रत्यय–' इत्यङ्गसंज्ञायाम् 'अनङ्सौ' इति 'ङिच्चे'ति सूत्रबलात् सखिशब्दान्तस्य इकारस्य अनङि अनुबन्धलोपे 'सखन् स्' इति जाते 'अलोन्त्यात् पूर्व उपधा' इत्युपधासंज्ञायां 'सर्वनामस्थाने चाऽसम्बुद्धौ' इत्युपधायाः दीर्घे 'सखान् स्' इति स्थितौ 'अपृक्त एकाल् प्रत्ययः' इति सस्य अपृक्तसंज्ञायां 'हल्ङ्याभ्यः–' इति सलोपे 'न लोपः प्रातिपदिकान्तस्य' इति नलोपे 'सखा' इति ।

सख्युः ( ई० ४४ )—सखिशब्दात् ङसि विभक्तौ 'इको यणचि' इति यणि 'ख्यत्यात्परस्य' इत्यनेन विभक्तेरकारस्योत्वे सस्य रुत्वे विसर्गे 'सख्युः' इति ।

बहुगणेति । ( ई० ४५ )—बहुश्च, गणश्च, वतुश्च, डतिश्चेति समाहारद्वन्द्वः । एतत् संख्यासंज्ञं स्यादित्यर्थः । उदाहरणं यथा—बहुकः, गणकः, यावान्, कति, इत्यादि । बहुगणशब्दाविह त्रित्वादिपरार्धान्तसंख्याव्यापकधर्मविशेषवाचिनौ गृह्येते, नतु वैपुल्यसंघवाचिनौ, संख्यायतेऽनयेति अन्वर्थसंज्ञाविधानात् । वतुडती प्रत्ययौ संज्ञाविधावपि इह तदन्तग्रहणं, केवलयोः प्रयोगानर्हत्वात् ।

कति ( ई० ४५, ५२ )-का संख्या परिमाणमस्येति विग्रहे डतिः 'कति' इति । तस्मात् बहुत्वविशिष्टवाचकात् डत्यन्तात् कतिशब्दात् जसि शसि च विभक्तौ 'बहुगणवतुडतिसंख्या' इति संख्यासंज्ञायां 'डति च इति षट्संज्ञायां 'षड्भ्यो लुक्' इति जश्शसोर्लुकि 'कति' इति । नच जसि विभक्तौ 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति परिभाषया प्रत्ययलक्षणेन 'जसि च' इत्यनेन इकारस्य गुणः कुतो नेति वाच्यम्, 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधात् ।

प्रियत्रयाणाम् ( ई० ४३ )—प्रियत्रिशब्दादामि 'त्रेस्त्रयः' इति 'पदाङ्गाधिकारे'ति परिभाषया त्रिशब्दान्तस्यापि त्रयादेशे 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे 'नामि' इति दीर्घे 'अट्कुप्वाङ्–' इति णत्वे उक्तं रूपं सिद्धम् । नच 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति न्यायस्य जागरूकत्वेन त्रिशब्दस्यात्र अन्यपदार्थे विशेषणात् गौणत्वेन त्रयादेशः कथमिति वाच्यम्, गौणमुख्यन्यायस्य पदकार्यविषयत्वात् ।

हे बहुश्रेयसि ( ई० ५२ )—बहुश्रेयसीशब्दात् सम्बोधनविवक्षायां सौ

'प्रथमलिङ्गग्रहणं च' इति नदीसंज्ञायाम् 'अम्बार्थनद्योर्ह्रस्वः' इति ईकारस्य ह्रस्वत्वे 'एङ्ह्रस्वात्सम्बुद्धेः' इति सम्बुद्धिलोपे उक्तं रूपं सिद्धम् ( अत्र ह्रस्वविधसामर्थ्यात् 'ह्रस्वस्य गुणः' इति न प्रवर्तते इत्यवसेयम् )

**बहुश्रेयस्याम्**—वहुश्रेयसीशब्दात् सप्तम्येकवचने ङिविभक्तौ 'प्रथमलिङ्गग्रहणं च' इति नदीसंज्ञायां 'ङेराम्नद्याम्नीभ्यः' इति ङेरामि 'वहुश्रेयसी आम्' इति स्थिते स्थानिवद्भावेन ङित्वमादाय 'आण्नद्याः' इत्यादि 'आटश्च' इति वृद्धौ यणि उक्तं रूपं सिद्धम् । न च ङेरामि कृते 'ह्रस्वनद्यापो नुट्' इति नुटि ततः 'यदागमाः' इति न्यायेन नामोऽप्यामग्रहणेन ग्रहणात् आट् कुतो नेति वाच्यम् , परत्वादाटा नुटो वाधसम्भवात् । ननु परत्वात् नुटं प्रबाध्य कृतेप्याडागमे नुट् कुतो नेति चेन्न 'विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति न्यायस्य जागरूकत्वात् ।

**प्रध्यम्**—'प्रधी अम्' इति स्थिते 'अमि पूर्वः' इति प्रबाध्य 'अचिश्नुधातु—' इति इयङि प्राप्ते तमपि प्रबाध्य 'एरनेकाचः–इति यणि प्रध्यम् इति ।

**ग्रामण्याम्**—ग्रामं नयति = नियच्छति, इति ग्रामणीः । ग्रामणीशब्दात् ङौ 'ङेराम्नद्याम्नीभ्यः' इति नीशब्दात् परस्य ङेरामि 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणि 'ग्रामण्याम्' इति ।

**शुद्धधियौ** ( ई० ४२ ) शुद्धा धीर्यस्येति विग्रहे निष्पन्नात् शुद्धधीशब्दात् औविभक्तौ 'शुद्धधी औ' इति स्थिते 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' इति वार्तिकेन शुद्धशब्दस्य गतिकारकेतरत्वात् तत्पूर्वकस्य धीशब्दस्येकारस्य 'एरनेकाचः–' इति प्राप्तयणो निषेधे 'अचिश्नुधातु–' इति इयङि 'शुद्धधियौ' इति । ( शुद्धं ब्रह्म ध्यायतीति विग्रहे तु कारकपूर्वकत्वात् स्यादेव यण्—'शुद्धध्यौ' इत्यादि )

**क्रोष्टा** ( ई० ४७, ४८, ५० )—क्रोष्टुशब्दात् सौ अनुबन्धलोपे 'तृज्वत्क्रोष्टुः' इति तृज्वद्भावे कृते 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे प्राप्ते तम्प्रबाध्य 'ऋदुशनस्पुरुदंशोऽनेहसां च' इत्यनङि अनुबन्धलोपे 'अप्तृन्तृच्–'इति उपधादीर्घे 'हल्ङ्याब्भ्यः' इति सुलोपे 'न लोपः प्रातिपदिकान्तस्य' इति न लोपे 'क्रोष्टा' इति ।

**क्रोष्टुः** ( ई० ४१, ४२, ५२ )—क्रोष्टुशब्दात् ङसि अनुबन्धलोपे 'विभाषा तृतीयादिष्वचि' इति तृज्वद्भावे 'ऋत उत्' इति उत्वे रपरत्वे 'रात्सस्य' इति सलोपे 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे 'क्रोष्टुः' इति । तृज्वद्भावाभावे 'शेषो

ध्यसखि' इति घिसंज्ञायां 'घेर्ङिति' इति गुणे 'ङसिङसोश्च' इति पूर्वरूपे सस्य रुत्वे विसर्गे च 'क्रोष्टोः' इति भवति ।

**धातृणाम्** ( ई० ५२ )—धातृशब्दादामि 'ह्रस्वनद्यापो नुट्' इति नुटि 'नामि' इति दीर्घे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे 'धातॄणाम्' इति ।

**पितरौ**—पितृशब्दादौ विभक्तौ 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे रपरत्वे च कृते 'पितरौ' इति । अत्र व्युत्पत्तिपक्षे नप्त्रादिग्रहणस्य नियमार्थत्वात् 'अप्तृन्नि'ति दीर्घो न । अव्युत्पत्तिपक्षे तु—प्तृन्तृजादिष्वनन्तर्भावात् दीर्घशङ्कैव नोदेतीति ।

**नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्**—अयम्भावः 'अप्तृन्नि'ति सूत्रे 'उणादयो व्युत्पन्नानि प्रातिपदिकानी'ति पक्षे नप्त्रादीनां सप्तानां तृन्नन्तत्वात्तृजन्तत्वाच्च तृन्-तृच्ग्रहणेनैव दीर्घे सिद्धे नप्त्रादिग्रहणं, 'सिद्धे सत्यारभ्यमाणो विधिर्नियमार्थो भवतीति' सिद्धान्तात्, नियमयति-'तृन्तृजन्तानां चेत्तर्हि नप्त्रादीनामेवे'ति । नियमेन च स्वेतरस्वजातीयव्यावृत्तिः क्रियते, इति नप्त्रादीतरोणादिनिष्पन्नतृन्नन्ततृजन्तशब्दानां न दीर्घः इति ।

**नृणाम्**—नृशब्दादामि 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे 'नृ नाम्' इति स्थिते 'नामि' इति सूत्रं प्रबाध्य 'नृ च' इति विभाषया दीर्घे 'ऋवर्णान्नस्ये'ति णत्वे 'नॄणाम्' इति । पक्षे नृणाम्' इति । अत्र 'नामी'ति दीर्घस्तु न 'सकृद्गतौ यद्बाधितं तद्बाधितमेवे'ति न्यायस्य जागरूकत्वात् ।

**गौः** ( ई० ४५ )—गो शब्दात् सौ 'गोतो णित्' इति ओकारात्परस्य सर्वनामस्थानस्य 'सु' इत्यस्य णिद्वद्भावे 'अचोऽञ्णिति' इति वृद्धौ सस्य रुत्वे विसर्गे 'गौः' इति सिद्धम् ।

**गाः** ( ई० ४६ )—गोशब्दात् शसि अनुबन्धलोपे 'औतोऽम्शसोः' इति गोशब्दस्य ओकारस्य विभक्तेरकारस्य च आकारैकादेशे सस्य रुत्वे विसर्गे 'गाः' इति सिद्धम् ।

**राः** ( ई० ४९ )—रैशब्दात् सौविभक्तौ 'रायो हलि' इति रैशब्दस्य ऐकारस्य आकारादेशे सस्य रुत्वे विसर्गे 'राः' इति निष्पन्नम् ।

इति अजन्तपुँल्लिङ्गप्रकरणम् ।

# अथ अजन्तस्त्रीलिङ्गप्रकरणम्

**सर्वस्याः** ( ई० ५१ )—सर्वाशब्दात् ङसि अनुबन्धलोपे 'सर्वा अस्' इति स्थिते 'याडापः' इति याटं प्रबाध्य 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याटि आवन्तस्य ह्रस्वत्वे च कृते अनुबन्धलोपे 'सर्वस्या अस्' इति स्थिते सवर्णदीर्घे सस्य रुत्वे विसर्गे 'सर्वस्याः' इति।

**उत्तरपूर्वस्यै**—उत्तरस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालमिति विग्रहे 'दिङ्नामान्यन्तराले' इति समासनिष्पन्नात् उत्तरपूर्वाशब्दात् ङेविभक्तौ 'विभाषा दिक्समासे बहुव्रीहौ' इति विभाषया सर्वनामसंज्ञायां 'सर्वनाम्नः स्याड्—'इति स्याड्ढ्रस्वे 'वृद्धिरेचि' इति वृद्धौ 'उत्तरपूर्वस्यै' इति। पक्षे सर्वनामसंज्ञाऽभावे 'याडापः' इति याटि वृद्धौ 'उत्तरपूर्वायै' इति।

**उत्तरपूर्वायै** ( ई० ४५ )—'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रेण लक्षणप्रतिपदोक्तपरिभाषया 'दिङ्नामान्यन्तराले' इति दिक्शब्दमुच्चार्य निष्पन्नप्रतिपदोक्तदिक्समास एव सर्वनामसंज्ञाविधानात् 'योत्तरा सा पूर्वा यस्याः उन्मुग्धायाः' इति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासनिष्पन्न 'उत्तरपूर्वाशब्दात् ङे विभक्तौ 'याडापः' इति याटि 'वृद्धिरेचि' इति वृद्धौ 'उत्तरपूर्वायै' इति।

**हे अम्ब** ( ई० ४० )—अम्बाशब्दात् सम्बोधनविवक्षायां सौ 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वे सुलोपे 'हे अम्ब' इति।

**ङिति ह्रस्वश्च**—अत्र सूत्रे 'ङिति' इत्येकं वाक्यम्। 'इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ङिति नदीसंज्ञौ वा स्तः' इति तस्याऽर्थः। 'ह्रस्वश्च' इत्यपरं वाक्यम्। 'ह्रस्वौ इवर्णोवर्णौ ङिति स्त्रियां नदीसंज्ञौ वा स्तः' इति तस्यार्थः। अत्र 'नेयङुवङ्स्थानावस्त्री' इत्यतो अनुवृत्तम् अस्त्रीति तु इयङुवङ्स्थानावित्यादिप्रथमवाक्यविहितनदीत्वस्यैव पर्युदासः, न तु ह्रस्वावित्यादिद्वितीयववाक्यविहितनदीत्वस्याऽपि, तत्सम्बद्धस्यैवानुवृत्तेः।

**मत्यै** ( ई० ५२ )—मतिशब्दात् ङेविभक्तौ अनुबन्धलोपे 'मति ए' इति जाते 'ङितिह्रस्वश्च' इति नदीसंज्ञायाम् 'आण्नद्याः' इत्याटि 'आटश्च' इति वृद्धौ 'इको यणचि' इति यणि 'मत्यै' इति। नदीत्वाभावे 'शेषो घ्यसखि' इति घिसंज्ञायां 'घेर्ङिति' इति गुणे 'एचोऽयवायावः' इत्ययादेशे 'मतये' इति सिद्धम्।

**मत्याम्** ( ई० ४० )—मतिशब्दात् ङिविभक्तौ 'ङिति ह्रस्वश्च' इति नदी-संज्ञायाम् 'इदुद्भ्याम्' इति ङेरामि कृते स्थानिवद्भावेन ङित्वमादाय 'आण्नद्याः' इत्यादि 'आटश्च' इति वृद्धौ 'इको यणचि' इति यणि 'मत्याम्' इति । 'नदीसंज्ञाभावे 'शेषो घ्यसखि' इति घिसंज्ञायाम् 'अच्च घेः' इति ङेरौत्वे घेरकारादेशे च कृते 'वृद्धि-रेऽचि' इति वृद्धौ 'मतौ' इति ।

**तिस्रः**—त्रिशब्दाज्जसि शसि च विभक्तौ 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति तिस्रादेशे 'ऋतो ङि–' इति गुणं प्रबाध्य पूर्वसवर्णदीर्घे प्राप्ते तमपि प्रबाध्य 'अचि र ऋतः' इति रेफादेशे सस्य रुत्वे विसर्गे 'तिस्रः' इति ।

**तिसृणाम्** ( ई० ४१, ४२, ४६, ४७, ५२ )—त्रिशब्दादामि विभक्तौ 'त्रि-चतुरोः स्त्रियां तिसृचतसृ' इति त्रिशब्दस्य तिस्रादेशे 'तिसृ आम्' इति स्थिते 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इत्युक्त्या 'अचि र ऋतः' इति प्राप्तं रेफादेशं बाधित्वा 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे 'नामि' इति दीर्घे प्राप्ते 'न तिसृचतसृ' इति निषेधे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे 'तिसृणाम्' इति ।

**त्रिशब्दस्य रूपाणि** ( ई० ३७ )—

( त्रिशब्दो नित्यं बहुवचनान्तः )

| पुंसि | स्त्रियाम् | नपुंसके |
|---|---|---|
| त्रयः | तिस्रः | त्रीणि |
| त्रीन् | तिस्रः | त्रीणि |
| त्रिभिः | तिसृभिः | त्रिभिः |
| त्रिभ्यः | तिसृभ्यः | त्रिभ्यः |
| त्रिभ्यः | तिसृभ्यः | त्रिभ्यः |
| त्रयाणाम् | तिसृणाम् | त्रयाणाम् |
| त्रिषु | तिसृषु | त्रिषु |
| हे त्रयः | हे तिस्रः | हे त्रीणि |

**स्त्रीः** ( ई० ४३, ४४ )—स्त्रीशब्दात् शसि 'स्त्री–अस्' इति स्थिते 'वाऽम्-शसोः' इति इयङि सस्य रुत्वे विसर्गे 'स्त्रियः' इति । पक्षे पूर्वसवर्णदीर्घे सस्य रुत्वे विसर्गे 'स्त्रीः' इत्युक्तं रूपं सिद्धम् ।

**स्त्रियै** ( ई० ५० )—स्त्रीशब्दात् ङेविभक्तौ 'यूस्त्र्याख्यौ नदी' इति नदीसंज्ञा-

याम् 'आण्नद्याः' इत्यादि 'आटश्च' इति वृद्धौ 'स्त्रियाः' इति इयङि अनुबन्धलोपे 'स्त्रियै' इति ।

स्त्रीणाम् ( ई० ४८ )—स्त्रीशब्दादामि 'यू स्त्र्याख्यौ नदी' इति नदीत्वात् 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे 'पर्यन्यवल्लक्षणप्रवृत्त्या 'नामि' इति दीर्घे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वे 'स्त्रीणाम्' इति ।

श्रियै—श्रीशब्दात् ङेविभक्तौ 'यू स्त्र्याख्यौ नदी' इति प्राप्तनदीत्वस्य 'नेयङुवङ्-स्थानावस्त्री' इति निषेधे कृते 'ङिति ह्रस्वश्च' इत्यनेन विभाषया नदीसंज्ञायाम् 'आण्नद्याः' इत्यादि 'आटश्च' इति वृद्धौ 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति इयङि अनुबन्धलोपे 'श्रियै' इति । नदीत्वाऽभावे इयङि 'श्रिये' इति ।

श्रीणाम् ( ई० ५२ )—श्रीशब्दादामि विभक्तौ 'वाऽमि' इति नदीसंज्ञायां 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे पर्यन्यवल्लक्षणप्रवृत्त्या 'नामि' इति दीर्घे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वे 'श्रीणाम्' इति । नदीत्वाभावे 'अचिश्नुधातु-भ्रुवां य्वोरियङुवङौ' इति इयङि 'श्रियाम्' इति भवति ।

भ्रुवाम् ( ई० ३७ ) भ्रूशब्दात् सप्तम्येकवचने ङिविभक्तौ 'ङिति ह्रस्वश्च' इति विभाषया नदीसंज्ञायां 'ङेराम्नद्याम्नीभ्यः' इति ङेरामि 'आण्नद्याः' इति आटि 'आटश्च' इति वृद्धौ 'अचिश्नुधातु' इत्युवङि अनुबन्धलोपे 'भ्रुवाम्' इति । नदीत्वाभावे उवङि 'भ्रुवि' इति । षष्ठीबहुवचने तु 'वामि' इति विकल्पेन नदीसंज्ञायां भ्रूणां, भ्रुवामिति रूपद्वयं भवति ।

क्रोष्ट्री ( ई० ३८ )—क्रोष्टुशब्दात् स्त्रीत्वविवक्षायां 'स्त्रियां च' इति तृज्वद्भावे 'क्रोष्टृ' इति जाते 'ऋन्नेभ्यो ङीप्' इति ङीपि यणि 'क्रोष्ट्री' इति । तस्मात् सौ हल्ङ्यादिना सुलोपे उक्तं रूपं सिद्धम् ।

स्वसा ( ई० ४७ )—स्वसृशब्दात् सौ 'ऋन्नेभ्यो ङीप्' इति ङीपि प्राप्ते 'न षट्स्वस्रादिभ्यः पञ्चभ्यः' इति तन्निषेधे 'ऋदुशनस्पुरुदंसोऽनेहसां च' इत्यनङि अनुबन्धलोपे 'स्वसन् स्' इति जाते 'अप्तृन्तृच्—' इति दीर्घे हल्ङ्यादिलोपे 'न लोपः प्रातिपदिकान्तस्य' इति नलोपे 'स्वसा इति ।

इति अजन्तस्त्रीलिङ्गप्रकरणम् ।



# अथ अजन्तनपुंसकलिङ्गप्रकरणम्

**ज्ञानानि** ( ई० ३४ )—ज्ञानशब्दात् जसि शसि च विभक्तौ 'जश्शसोः शिः' इति श्यादेशे 'शि सर्वनामस्थानम्' इति 'शि' इत्यस्य सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इत्यनेन नुमि अनुबन्धलोपे 'सर्वनामस्थाने चाऽसम्बुद्धौ' इति दीर्घे 'ज्ञानानि' इति।

**कतरत्** ( ई० ४७ )—कतरशब्दात् सौ 'अतोऽम्' इति सूत्रं प्रबाध्य "अद्ड्-तरादिभ्यः पञ्चभ्यः' इति सोरद्ड्डि अनुबन्धलोपे 'कतर अद्' इति दशायां क्लीबे 'शि' इत्यस्यैव सर्वनामस्थानसंज्ञाविधानात् असर्वनामस्थानिके 'अदि' परे 'यचि भम्' इत्यनेन 'कतर' इत्यस्य भसंज्ञायां 'टेः' इति टिलोपे 'वाऽवसाने' इति चर्त्वे 'कतरत्' इति। चर्त्वाऽभावे 'कतरद्' इति।

**श्रीपाय** ( ई० ५२ )—श्रीपाशब्दात् ङेविभक्तौ 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वे 'ङेर्यः' इति ङेर्यादेशे 'सुपि च' इति दीर्घे 'श्रपीाय' इति।

**हे वारे** ( ई० ५२, ५३ )—वारिशब्दात् सम्बोधनैकवचने सौ 'स्वमोर्नपुंसकात्' इति सोर्लुकि 'न लुमताङ्गस्य' इत्यस्यानित्यत्वपक्षे 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति प्रत्ययलक्षणेन 'ह्रस्वस्य गुणः' इति सम्बुद्धिनिमित्तके गुणे 'हे वारे' इति। 'न लुमते'त्यस्य नित्यत्वपक्षे तु 'हे वारि' इति। अत एव 'हे त्रपो–हे त्रपु' इति भाष्योदाहरणं सङ्गच्छते।

'न लुमते'त्यस्याऽनित्यत्वे किं मानम्? इति चेच्छृणु—'इकोऽचि विभक्तौ' इत्यत्र अज्ग्रहणं किमर्थम्, हलादिषु भ्यामादिषु हि सत्यपि नुमि 'न लोपः प्रातिपदिकान्तस्ये'ति नस्य लोपसम्भवात्। न च सम्बुद्धिव्यावृत्त्यर्थमज्ग्रहणम्, अन्यथा तत्र नुमि सति 'न ङिसम्बुद्ध्योः' इति निषेधे सति नकारश्रवणप्रसंगः इति वाच्यम्, सम्बुद्धेर्लुका लुप्ततया प्रत्ययलक्षणाभावेन तत्र नुमः प्राप्तेरभावात्। 'न लुमते'त्यस्याऽनित्यत्वे तु सम्बुद्धौ प्रत्ययलक्षणेन प्राप्तं नुमं वारयितुम् अज्ग्रहणं सफलमित्यज्ग्रहणं 'न लुमते' त्यस्याऽनित्यत्वे लिङ्गमिति तत्त्वविदः।

**वारिणे** ( ई० ४२, ५२ )—वारिशब्दात् चतुर्थ्येकवचने 'वारि ए' इति दशायां 'शेषो घ्यसखि' इति घिसंज्ञायां 'घेर्ङिति' इति गुणे प्राप्ते 'वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम्पूर्वविप्रतिषेधेन' इति पूर्वविप्रतिषेधस्य प्रबलत्वात् 'इकोऽचि विभक्तौ' इति नुमि 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वे 'वारिणे' इति जातम्।

**अनादये** ( ई० ४१, ४२, ४६, )—न आदिः = अनादिः, तस्मै 'अनादये-अनादिने' इति । अनादिशब्दात् ङेविभक्तौ 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति विभाषया पुंवत्वे सति 'इकोऽचि विभक्तौ' इति नुमोऽप्रवृत्तेः 'शेषो घ्यसखि' इति घिसंज्ञायां 'घेर्ङिति' इति गुणे अयादेशे 'अनादये' इति । पुंवत्वाऽभावपक्षे—नुमि 'अनादिने' इति ।

अनादिशब्दस्य कथं भाषितपुंस्कत्वमिति चेच्छृणु—भाषितः पुमान् येन प्रवृत्त-निमित्तेन तत् भाषितपुंस्कम् । अर्थात् नपुंसकत्वे लिङ्गान्तरे च यस्य एकमेव वाच्य-तावच्छेदकं तत् शब्दस्वरूपं भाषितपुंस्कशब्देन विवक्षितम् । अनादिशब्दश्च उत्प-त्त्यभावात्मकमनादित्वं पुरस्कृत्य स्त्रीपुन्नपुंसकतत्तद्व्यक्तिप्रत्यायक इति, भवति तस्य प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कतेति तत्त्वविदः । उक्तं च मूले—

यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते ।
क्लीबवृत्ति तदेव स्यादुक्तपुंस्कं तदुच्यते ॥ इति ।

शब्दः पुंस्त्वे यमर्थं भजते यच्च शब्दस्वरूपं भजते, तमेवार्थं प्रधानीकृत्य शब्द-स्वरूपमपि पुंवदेव भवेच्चेत् स शब्दः भाषितपुंस्कसंज्ञां लभते इति तात्पर्यार्थः ।

**पीलुने** ( ई० ४० )—पीलुर्वृक्षः, तत्फलं पीलु, तस्मै 'पीलुने' इति । 'इको-ऽचि विभक्तौ' इति नुम् । अत्र 'तृतीयादिष्वि'ति न पुंवत्, प्रवृत्तिनिमित्तभेदात् । तथा हि—वृक्षत्वव्याप्यजातिविशेषात्मकं पीलुत्वं वृक्षविशेषे वाच्ये प्रवृत्तिनिमित्तम्, फलविशेषे वाच्ये तु फलत्वव्याप्यजातिविशेषात्मकं पीलुत्वं प्रवृत्तिनिमित्तम्, इति प्रवृत्तिनिमित्तभेदेन भाषितपुंस्कत्वाभावान्न पुंवदित्युक्तिः सङ्गतेति । तदुक्तं मूले—

'पीलुर्वृक्षः फलं पीलु, तस्मै पीलुने न तु पीलवे ।
वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः' ॥ इति ।

**दध्ना** ( ई० ४७ )—दधिशब्दाट्टाविभक्तौ 'दधि आ' इति स्थिते 'अस्थि-दधिसक्थ्यक्ष्णामनङुदात्तः' इत्यनङि अनुबन्धलोपे 'यचि भम्' इति भसंज्ञायाम् 'अल्लोपोऽनः' इत्यनोऽकारस्य लोपे 'दध्ना' इति ।

**दध्ने** ( ई० ४४ )—दधिशब्दाद् ङेविभक्तौ 'अस्थिदधि' इत्यनङि भत्वाद् 'अल्लोपोऽनः' इत्यल्लोपे 'दध्ने' इति ।

**दध्नि** ( ई० ४० )—दधिशब्दात् ङिविभक्तौ 'अस्थिदधि-' इत्यनङि 'विभाषा ङिश्योः' इति अनोऽकारस्य लोपे 'दध्नि' इति । पक्षे 'दधनि' इति ।

सुधिया—'सुष्ठु ध्यायति' इति विग्रहे निष्पन्नात् सुधीशब्दात् तृतीयैकवचने 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति पुंवद्भावे सति ह्रस्व-नुमोरभावे 'अचि श्नुधातु-' इतीयङि अनुबन्धलोपे 'सुधिया' इति । पुंवद्भावाभावपक्षे 'ह्रस्वो नपुंसके-' इति ह्रस्वे इकोऽचि विभक्तौ' इति नुमि 'सुधिना' इति । अत्र सुध्यातृत्वस्य, शोभन-ज्ञानवत्त्वस्य वा प्रवृत्तिनिमित्तस्य पुंसि नपुंसके च सत्त्वात् भाषितपुंस्कत्वमुपपन्न-मिति ध्येयम् ।

प्ररिभ्याम्—प्रकृष्टो राः धनं यस्येति विग्रहे निष्पन्नात् प्रैशब्दात् सौ 'ह्रस्वो नपुंसके-' इत्यनेन 'एच इग्घ्रस्वादेशे' इति नियमेन एच्रूपस्य ऐकारस्य इकारे ह्रस्वे कृते 'प्ररि' इति । तस्मात् भ्यामि 'प्ररि भ्याम्' इति स्थिते 'एकदेशविकृत-न्यायेन 'रायो हलि' इत्यात्वे 'प्रराभ्याम्' इति निष्पन्नम् ।

इति अजन्तनपुंसकलिङ्गप्रकरणम्

# अथ हलन्तपुँल्लिङ्गप्रकरणम्

लिट्त्सु (ई० २५)—लिह्शब्दात्सुपि अनुबन्धलोपे 'लिह् सु' इति स्थिते 'हो ढः' इत्यनेन हस्य ढत्वे 'झलां जशोऽन्ते' इत्यनेन ढस्य जश्त्वेन डकारे 'लिड् सु' इति दशायां 'डः सि धुट्' इति डस्य धुटि अनुबन्धलोपे 'लिड् ध् सु' इति जाते 'खरि च' इत्यनेन धस्य चर्त्वेन तकारे पुनः 'खरि च' इति डस्य चर्त्वेन टकारे 'लिट्त्सु' इति । धुडभावपक्षे डकारस्य चर्त्वेन टकारे 'लिट्सु' इति ।

धुक् ( ई० ४८ ) 'दुह्' इति क्विबन्तप्रातिपदिकात् सौ 'हल्ङ्याब्भ्यः-' इति सुलोपे 'हो ढः' इति ढत्वं प्रबाध्य 'दादेर्धातोर्घः' इति हस्य घत्वे कृते झषन्तत्वात् 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति भष्भावे घस्य जश्त्वे 'वाऽवसाने' इति गस्य चर्त्वे 'धुक्' इति । पक्षे 'धुग्' इति । ननु घत्वे कृते 'दुघ्' इति झषन्तमेका-च्कम्, तस्य धातुत्वात् धात्ववयवत्वाऽभावात् कथमिह दकारस्य भष्भावेन धकारः स्यादिति चेन्न 'राहोश्शिरः' इतिवत् व्यपदेशिवद्भावेन धात्ववयवत्वात्तत्सिद्धेः ।

विश्वौहः ( ई० २२ )—विश्ववाह्शब्दाच्छसि अनुबन्धलोपे 'यचि भम्' इति भसंज्ञायां 'वाह ऊठ्' इत्यनेन 'इग्यणः सम्प्रसारणम्' इति बलात् वरूपस्य यणः स्थाने ऊकाररूपे सम्प्रसारणे पूर्वरूपे च कृते 'विश्व ऊ ह् अस्' इति जाते 'एत्येध-

त्यूठ्सु' इति पूर्वपरयोः स्थाने वृद्धौ सकारस्य रुत्वे विसर्गे 'विश्वौहः' इति सिद्धम् ।

**अनड्वान्** ( ई० ४०, ४७, ५२ )—अनडुह्शब्दात् प्रथमैकवचने 'चतुरनडुहोरामुदात्तः' इत्यनेन आमि अनुबन्धलोपे 'अनडु आह् सु' इति दशायाम् 'सावनडुहः' इत्यनेन नुमि अनुबन्धलोपे 'इको यणचि' इति यणि 'अनड्वान्ह्स्' इति दशायां हल्ङ्यादिना सलोपे 'संयोगान्तस्य लोपः' इत्यनेन हकारस्य लोपे 'अनड्वान्' इति सिद्धम् । अत्र सुलोपस्याऽसिद्धत्वान्नलोपो नेति बोध्यम् ।

**हे अनड्वन्** ( ई० ४० )—अनडुह्शब्दात् सम्बोधनविवक्षायां सौ 'अम् सम्बुद्धौ' इत्यमि मित्वादन्त्यादचः परे कृते 'अनडु अह् सु' इति स्थिते यणि 'सावनडुहः' इति नुमि हल्ङ्यादिना सुलोपे 'संयोगान्तस्य लोपः' इति हलोपे 'हे अनड्वन्' इति जातम् ।

**चतुर्ण्णाम्** ( ई० ४१, ५२ )—चतुर्शब्दादामि विभक्तौ 'चतुर् आम्' इति स्थिते 'षट्चतुर्भ्यश्च' इति नुटि अनुबन्धलोपे 'रषाभ्यां नो णः समानपदे' इत्यनेन णत्वे 'अचो रहाभ्यां द्वे' इत्यनेन द्वित्वे 'चतुर्ण्णाम्' इति सिद्धम् । द्वित्वाभावे 'चतुर्णाम्' इति ।

**चतुर्षु** ( ई० ४६ )—चतुर्शब्दात् सुपि विभक्तौ 'चतुर् सु' इति स्थिते 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे प्राप्ते 'रोः सुपि' इति निषेधे 'आदेशप्रत्ययोः' इति सस्य षत्वे 'अचो रहाभ्यां द्वे' इति षस्य द्वित्वे प्राप्ते 'शरोऽचि' इति निषेधे 'चतुर्षु' इति सिद्धम् ।

**आभ्याम्** ( ई० ४३, ४८, ५२ )—इदम् शब्दात् भ्यामि विभक्तौ 'त्यदादीनामः' इत्यनेन अत्वे 'अतो गुणे' इति पररूपे 'इदभ्याम्' इति जाते 'हलि लोपः' इत्यनेन 'अलोऽन्त्यस्ये'ति परिभाषया अन्त्यस्य दकारस्य लोपे प्राप्ते 'नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे' इति परिभाषया अलोन्त्यविध्यभावे इद्भागस्यैव लोपे 'अ भ्याम्' इति स्थिते 'आद्यन्तवदेकस्मिन्' इत्येकस्मिन्नेवाऽकारे अन्तवत्भावेन अदन्तत्वं मत्वा 'सुपि चे'ति दीर्घे 'आभ्याम्' इति सिद्धम् ।

**एभिः** ( ई० ४२, ४९ )—इदम्शब्दात् भिसि अत्वे पररूपे 'इद भिस्' इति जाते 'अतो भिस ऐस्' इति भिसः ऐसि प्राप्ते 'नेदमदसोरकोः' इति निषेधे 'हलि लोपः' इत्यनेन इद्भागस्य लोपे 'बहुवचने झल्येत्' इत्येत्वे सस्य रुत्वे विसर्गे 'एभिः' इति ।

'इदम्' शब्दस्य त्रिषु लिङ्गेषु रूपाणि ( ई० ३२ )—

| पुँल्लिङ्गे— | | | स्त्रीलिङ्गे— | | |
|---|---|---|---|---|---|
| अयम् | इमौ | इमे | इयम् | इमे | इमाः |
| इमम् ( एनम् ) | इमौ (एनौ) | इमान् (एनान्) | इमाम् (एनाम्) | इमे (एने) | इमाः (एनाः) |
| अनेन (एनेन) | आभ्याम् | एभिः | अनया (एनया) | आभ्याम् | आभिः |
| अस्मै | आभ्याम् | एभ्यः | अस्यै | आभ्याम् | आभ्यः |
| अस्मात् | आभ्याम् | एभ्यः | अस्याः | आभ्याम् | आभ्यः |
| अस्य | अनयोः(एनयोः) | एषाम् | अस्याः | अनयोः(एनयोः) | आसाम् |
| अस्मिन् | अनयोः ,, | एषु | अस्याम् | अनयोः ,, | आसु |

नपुंसके—

| | | |
|---|---|---|
| इदम् | इमे | इमानि |
| इदम् ( एनत्-द् ) | इमे ( एने ) | इमानि ( एनानि ) |
| अनेन ( एनेन ) | आभ्याम् | एभिः |
| अस्मै | आभ्याम् | एभ्यः |
| अस्मात् | आभ्याम् | एभ्यः |
| अस्य | अनयोः ( एनयोः ) | एषाम् |
| अस्मिन् | अनयोः ,, | एषु |

( त्यदादेः सम्बोधनं नास्ति )

**राज्ञः**—'राजन्' शब्दाच्छसि 'राजन् अस्' इति स्थिते 'यचि भम्' इति भसंज्ञायाम् 'अल्लोपोनः' इति जकारोत्तरवर्त्तिनोऽकारस्य लोपे 'स्तोः श्चुना श्चुः' इति नस्य श्चुत्वेन ञकारे सस्य रुत्वे विसर्गे 'राज्ञः' इति ।

**राजभ्याम्** ( ई० ४१, ४७ )—'राजन् भ्याम्' इति स्थिते स्वादिष्वसर्वनामस्थाने' इति पदत्वात् 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे 'राज भ्याम्' इति स्थिते 'सुपि चे'ति दीर्घे प्राप्ते 'नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति' इति नलोपस्याऽसिद्धत्वात् दीर्घाऽभावे 'राजभ्याम्' इति ।

**वृत्रहा** ( ई० ४९ )—वृत्रो नाम असुरः तं हतवानित्यर्थे क्विबन्तनिष्पन्नात् वृत्रहन्शब्दात् सौ 'वृत्रहन् सु' इति स्थिते वृत्रहन्शब्दे 'हन्' इत्यस्यापि 'इन्हन्पूषार्यम्णां शौ' इति शावेव दीर्घ इति नियमात् सौ परतः 'सर्वनामस्थाने—' इति

दीर्घे अप्राप्ते 'सौ च' इत्यनेन दीर्घे हल्ङ्यादिना सुलोपे नलोपे 'वृत्रहा' इति सिद्धम् ।

वृत्रघ्नः ( ई० ४०, ४१, ५० ) वृत्रो नाम असुरः तं हतवानित्यर्थे क्विन्बत-निष्पन्नात् वृत्रहन् शब्दाच्छसि भसंज्ञायाम् 'अल्लोपो नः' इत्यल्लोपे 'हो हन्तेर्ञ्णिन्नेषु' इति हकारस्य कुत्वेनान्तरतम्यात् घकारादेशे सस्य रुत्वे विसर्गे 'वृत्रघ्नः' इति ।

नन्वत्र कृतेप्यल्लोपे तस्य पूर्वस्माद्विधौ स्थानिवत्त्वादुत्तरपदस्य एकाच्त्वात् 'एकाजुत्तरपदे णः' इत्यनेन, स्थानिवत्त्वाऽभावेऽपि 'प्रातिपदिकान्तनुम्विभक्तिषु च' इत्यनेन, 'कुमति च' इत्यनेन वा णत्वं कुतो नेति चेन्न, 'अत्पूर्वस्य' इत्यनेन ह्रस्वाकारपूर्वकस्यैव हन्तेर्नस्य णत्वनियमादत्र नकारस्य अकारपूर्वकत्वाऽभावात् णत्वाऽप्रवृत्तेः । न च 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायेन 'अत्पूर्वस्ये'ति सूत्रं 'हन्तेः' इत्यस्यैव नियामकं न तु 'एकाजुत्तरपदे णः' इत्यादेरिति वाच्यम्, तथा सति 'हन्तेरत्पूर्वस्य' इत्येकयोगेनैव 'हन्तेः' इत्यस्य अत्पूर्वेतरत्र निवृत्तौ सिद्धायां योगविभागस्य वैयर्थ्येन तत्सामर्थ्यादत्र उक्तन्यायाऽप्रवृत्तेर्बोधनेन विप्रकृष्टस्यापि 'एकाजुत्तरपदे णः' 'प्रातिपदिकान्तनुम्विभक्तिषु च' इत्यादेस्तेन नियमादप्रवृत्तेः।

मघवान् ( ई० ३३ )—'मघवन्' शब्दात् सौ 'मघवा बहुलम्' इति 'तृ' इत्यन्तादेशे अनुबन्धलोपे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुमि अनुबन्धलोपे हल्ङ्यादिलोपे 'संयोगान्तस्य लोपः' इति सलोपे 'मघवा बहुलम्' इति सूत्रस्थबहुलग्रहणात् संयोगान्तलोपस्याऽसिद्धत्वाभावेन 'सर्वनामस्थाने चाऽसम्बुद्धौ' इति नान्तस्योपधाया दीर्घे 'मघवान्' इति । तृत्वाऽभावे तु हल्ङ्यादिलोपे नान्तस्योपधाया दीर्घे नलोपे 'मघवा' इति ।

'मघवन्' शब्दस्य रूपाणि ( ई० ३३ )—

तृत्वपक्षे—

| | | |
|---|---|---|
| मघवान् | मघवन्तौ | मघवन्तः |
| मघवन्तम् | मघवन्तौ | मघवतः |
| मघवता | मघवद्भ्याम् | मघवद्भिः |
| मघवते | मघवद्भ्याम् | मघवद्भ्यः |
| मघवतः | मघवद्भ्याम् | मघवद्भ्यः |
| मघवतः | मघवतोः | मघवताम् |
| मघवति | मघवतोः | मघवत्सु |

तृत्वाऽभावपक्षे—

| | | |
|---|---|---|
| मघवा | मघवानौ | मघवानः |
| मघवानम् | मघवानौ | मघोनः |
| मघोना | मघवभ्याम् | मघवभिः |
| मघोने | मघवभ्याम् | मघवभ्यः |
| मघोनः | मघवभ्याम् | मघवभ्यः |
| मघोनः | मघोनोः | मघोनाम् |
| मघोनि | मघोनोः | मघवसु |
| हे मघवन् | हे मघवानौ | हे मघवानः |

**यूनः** (ई० ४१, ४२, ५३)—'युवन्' शब्दात् शसि 'यचि भम्' इति भसंज्ञायाम् 'श्वयुवमघोनामतद्धिते' इति वकारस्य सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'यु उन् अस्' इति दशायां यकारस्यापि 'श्वयुवमघोनाम्–' इति सम्प्रसारणे प्राप्ते 'न सम्प्रसारणे सम्प्रसारणम्' इति तन्निषेधे सवर्णदीर्घे सस्य रुत्वे विसर्गे 'यूनः' इति ।

**पन्थाः** ( ई० ४६, ४७ )—'पथिन्' शब्दात् सौ 'पथिमथ्यृभुक्षामात्' इति आत्वे 'इतोत्सर्वनामस्थाने' इति थकारोत्तरवर्तिनः इकारस्य अकारे 'थो न्थः' इति थकारस्य 'न्थादेशे 'अकः सवर्णे दीर्घः' इति दीर्घे सस्य रुत्वे विसर्गे 'पन्थाः' इति ।

**अष्टौ** ( ई० ४१, ४२ )—'अष्टन्' शब्दात् जसि शसि च विभक्तौ अनुबन्धलोपे 'अष्टन् अस्' इति स्थिते 'अष्टन आ विभक्तौ' इत्यनेन अष्टनो नकारस्य आत्वे 'अष्ट आ अस्' इति स्थिते सवर्णदीर्घे 'अष्टाभ्य औश्' इत्यनेन औशि अनुबन्धलोपे 'वृद्धिरेचि' इति वृद्धौ 'अष्टौ' इति सिद्धम् । ननु हलादावात्वस्य विधानेन कथमत्र अजादावात्वमिति चेन्न, एकमात्रालाघवेन 'अष्टभ्य औश्' इति वक्तव्ये 'अष्टाभ्य' इति दीर्घोच्चारणं क्वचिदजादावपि 'अष्टन आ विभक्तौ' इति सूत्रविहितमात्वं भवतीति ज्ञापनेनादोषात् ।

**अष्टानाम्** ( ई० ३२ )—'अष्टन्' शब्दात् षष्ठीबहुवचने 'ष्णान्ता षट्' इत्यनेन षट्संज्ञायां 'षट्चतुर्भ्यश्च' इति नुटि अनुबन्धलोपे 'अष्टन् नाम्' इति स्थिते 'अष्टन आ विभक्तौ' इत्यनेन पाक्षिके आत्वे 'अष्ट आ नाम्' इति दशायाम् 'अकः सवर्णे दीर्घः' इति दीर्घे 'अष्टानाम्' इति । आत्वाऽभावेऽपि 'अष्टानाम्' इति । तद्धि—षट्संज्ञायां सत्यां नुटि अनुबन्धलोपे 'नोपधायाः' इति दीर्घे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे 'अष्टानाम्' इति भवति ।

ऋत्विक् ( ई० ३१ ) ऋतावुपपदे 'यज्' धातोः 'ऋत्विग्दधृक्' इत्यादिना क्विनि 'लशक्वतद्धिते' इत्यनेन ककारस्य 'हलन्त्यम्' इत्यनेन नकारस्य च इत्संज्ञायां लोपे च कृते इकारस्योच्चारणार्थत्वेन तस्मिन्नपि गते क्विनो वकारस्य 'अपृक्त एकाल्-प्रत्ययः' इत्यपृक्तसंज्ञायां वेरपृक्तस्य इत्यपृक्तसंज्ञकस्य वस्य च लोपे विहिते क्विनः सर्वाऽपहारे 'वचिस्वपियजादीनां किति' इति सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्व-रूपे 'ऋतु इज्' इति स्थिते 'इको यणचि' इति यणि 'ऋत्विज्' इति स्थिते 'कृदतिङ्' इति सूत्रेण कृत्संज्ञायां 'कृत्तद्धितसमासाश्च' इति कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे 'ऋत्विज् स्' इति स्थिते हल्ङ्यादिना सलोपे 'क्विन्प्रत्ययस्य कुः' इत्यनेन जकारस्य कुत्वेन गकारे 'वाऽवसाने' इति तस्य चर्त्वेन ककारे 'ऋत्विक्' इति । चर्त्वाऽभावपक्षे 'ऋत्विग्' इति ।

युङ् ( ई० ३२ )—'युजिर् योगे' अस्माद्धातोः 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चु-युजिक्रुञ्चां च' इत्यनेन क्विनि 'लशक्वतद्धिते' इति ककारस्य 'हलन्त्यम्' इति नकारस्य, इत्संज्ञायाम् 'अपृक्त एकाल् प्रत्ययः' इत्यनेन अपृक्तसंज्ञायां सत्यां 'वेरपृक्तस्य' इत्यनेन वकारस्य च इत्संज्ञायां लोपे च विहिते इकारस्योच्चारणार्थत्वेन तस्मिन्नपि गते प्रत्ययलक्षणेन 'कृदतिङ्' इति कृत्संज्ञायां 'कृत्तद्धितसमासाश्चेति' कृदन्तत्वात् प्राति-पदिकसंज्ञायां सौ अनुबन्धलोपे 'युजेरसमासे' इति नुमि अनुबन्धलोपे हल्ङ्यादिना सलोपे 'संयोगान्तस्य लोपः' इति जलोपे 'क्विन्प्रत्ययस्य कुः' इति नस्य कुत्वेन ङकारे 'युङ्' इति सिद्धम् ।

विश्वाराट् ( ई० ३४ )—विश्वोपपदात् राज्धातोः 'सत्सूद्विष्' इति क्विपि क्विपः सर्वापहारे 'विश्वराज्' इति, तस्मात् कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ अनु-बन्धलोपे 'विश्वराज् स्' इति दशायां 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इत्यनेन जकारस्य षत्वे 'झलां जशोऽन्ते' इत्यनेन षकारस्य जश्त्वेन डकारे 'वाऽवसाने' इति डस्य चर्त्वे 'विश्वस्य वसुराटोः' इति विश्वशब्दस्य दीर्घे हल्ङ्या-दिना सलोपे 'विश्वाराट्' इति । चर्त्वाऽभावपक्षे 'विश्वाराड्' इति ।

आवाम् ( ई० २० )—अस्मच्छब्दात् प्रथमाद्विवचने 'अस्मद् औ' इति स्थिते 'ङे प्रथमयोरम्' इत्यनेन औकारस्य स्थाने अमि 'युवावौ द्विवचने' इति अस्मदो मपर्यन्तस्य आवादेशे 'आव अद् अम्' इति स्थिते 'अतो गुणे' इति पररूपे 'आवद् अम्' इति दशायां 'प्रथमायाश्च द्विवचने भाषायाम्' इत्यनेन दकारस्यात्वे

आव अा अम्' इति जाते 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घे 'आवा अम्' इति स्थिते 'अमि पूर्वः' इति पूर्वरूपे 'आवाम्' इति सिद्धम् ।

**युष्मान्** ( ई० ४१, ५१, ५२ ) युष्मच्छब्दाच्छसि 'युष्मद् अस्' इति स्थिते 'द्वितीयायां च' इत्यनेन अन्त्यस्य द्मात्रस्य आकारे सवर्णदीर्घे 'शसो न' इत्यनेन 'आदेः परस्ये'ति सहकाराच्छसोऽकारस्य नादेशे 'संयोगान्तस्ये'ति सलोपे 'युष्मान्' इति ।

**अस्माभिः** ( ई० ५० )—'अस्मद्' शब्दात् भिसि 'युष्मदस्मदोर्नादेशे' इति अस्मदोऽन्त्यस्य दस्य आत्वे 'अकः सवर्णे दीर्घः' इति दीर्घः 'अस्माभिः' इति सिद्धम् ।

**युष्मत्** ( ई० ५२ )—'युष्मद्' शब्दात् भ्यसि 'पञ्चम्या अत्' इति भ्यसो अदादेशे 'शेषे लोपः' इति युष्मदोऽन्त्यस्य दस्य लोपे 'अतो गुणे' इति पररूपे उक्तं रूपं सिद्धम् ।

**युष्माकम्** ( ई० ५२ )—'युष्मद्' शब्दादामि 'युष्मद् आम्' इति स्थिते 'साम आकम्' इति आमि साम्त्वारोपेण आकमादेशे 'युष्मद् आकम्' इति स्थिते 'शेषे लोपः' इति अन्त्यस्य दस्य लोपे सवर्णदीर्घे 'युष्माकम्' इति सिद्धम् ।

ननु 'युष्मद् आम्' इति स्थिते 'आमि सर्वनाम्नः सुट्' इति अदन्तात् परस्यामो विधीयमानस्य सुटः प्रसक्तिरेव नास्ति, न च 'शेषे लोपः' इति अन्त्यस्य दस्य लोपे कृते अदन्तात् परत्वमामोऽस्तीति वाच्यम्, आकमादेशात् प्राग् अनादेशतया 'योऽचि' इति सूत्रस्य प्राप्तया 'शेषे लोपः' इत्यस्याऽप्रसक्तेः । तथा च ससुट्कनिर्देशो व्यर्थः सूत्राऽसङ्गतिश्चेति चेन्न, आकमि कृते 'शेषे लोपः' इति लोपे सति प्राप्तस्य सुटो निवृत्त्यर्थं ससुट्कनिर्देशस्यावश्यकत्वात् ।

**श्रीशस्त्वावतु०**—इह = संसारे, श्रीशः = नारायणः, त्वा = त्वाम्, मा = माम्, अपि = च, अवतु = पातु । स हरिः = पूर्वोक्तः नारायणः, ते = तुभ्यम्, मे = मह्यम्, अपि = च, शर्म = सुखम्, दत्तात् = ददातु । स हरिः = पूर्वोक्तः नारायणः, ते = तव, मे = मम, अपि = च, स्वामी = प्रभुः, अस्तीति शेषः । ( सः ) विभुः = व्यापको नारायणः, वाम् = युवाम्, नौ = आवाम्, पातु = रक्षतु । ( सः ) ईशः = प्रभुः, वाम् = युवाभ्याम्, नौ = आवाभ्याम्, सुखं = कल्याणम्, ददातु = दत्तात् । ( सः ) हरिः = नारायणः, वां = युवयोः, नौ = आवयोः, पतिः = प्रभुः, अस्तीति शेषः । सः = हरिः, व = युष्मान्, नः = अस्मान्,

अव्यात् = रक्षेत् । सः = हरिः, वः = युष्मभ्यम्, नः = अस्मभ्यम्, शिवं = कल्याणं, दद्यात् । अत्र = इह लोके, सः=हरिः, वः = युष्माकम्, नः = अस्माकम्, सेव्यः = आराध्यः, अस्तीति शेषः ।

देवाऽस्मान् पाहि (ई० ४३) अत्र 'सामन्त्रितम्' इत्यनेन सम्बोधन-बहुवचनान्तस्य 'देवा' इत्यस्य आमन्त्रितसंज्ञायाम् 'आमन्त्रितं पूर्वमविद्यमानवत्' इति तस्याऽविद्यमानवद्भावे 'अस्मान्' इत्यत्र 'बहुवचनस्य वस्नसौ' इति अस्मदो नसादेशो न भवति । अस्मानित्यस्य पदात्परत्वाऽभावात्, पदादौ स्थितत्वाच्चेति ।

प्राचः (ई० ५२)—प्रपूर्वात् अञ्च् धातोः 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इति सूत्रेण क्विपि 'लशक्वतद्धिते' इति क्विनः ककारस्य 'हलन्त्यम्' इति नकारस्य च इत्संज्ञायां लोपे च कृते इकारस्योच्चारणार्थत्वेन तस्मिन्नपि गते 'वेरपृक्तस्य' इति वकारस्याऽपि लोपे कृते क्विनः सर्वापहारे 'प्र अञ्च्' इति स्थिते 'अनिदितां हल उपधायाः क्ङिति' इत्युपधानकारलोपे 'कृदतिङ्' इति क्विनः कृत्संज्ञकत्वात् 'प्र अच्' इत्यस्य 'कृत्तद्धितसमासाश्च' इति कृदन्तत्वात् प्रातिपदिकसंज्ञायां शसि अनुबन्ध-लोपे 'प्र अच् अस्' इति स्थिते 'यचि भम्' इति भसंज्ञायाम् 'अचः' इत्यनेनाकारस्य लोपे 'चौ' इति दीर्घे सकारस्य रुत्वे विसर्गे 'प्राचः' इति सिद्धम् ।

प्रतीचः—प्रतिपूर्वाद् 'अञ्च्' धातोः 'ऋत्विगि'त्यादिना क्विनि 'लशक्वतद्धिते' इति क्विनः ककारस्य 'हलन्त्यम्' इति नकारस्य चेत्संज्ञायां लोपे च कृते इकारस्यो-च्चारणार्थत्वेन तस्मिन्नपि गते 'वेरपृक्तस्य' इति वकारस्यापि लोपे क्विनः सर्वापहारे जाते 'अनिदितां हल उपधायाः क्ङिति' इत्यञ्चेरुपधानकारस्य लोपे 'कृदतिङ्' इति क्विनः कृत्संज्ञकत्वात् 'प्रति अच्' इत्यस्य 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां शसि अनुबन्धलोपे 'प्रति अच् अस्' इति स्थिते 'यचि भम्' इति भसंज्ञायाम् 'अचः' इत्यलोपे 'चौ' इति दीर्घे सकारस्य रुत्वे विसर्गे 'प्रतीचः' इति सिद्धम् ।

उदीचः (ई० ३२)—उत्पूर्वाद् 'अञ्च्' धातोः 'ऋत्विक्' इत्यादिना क्विनि क्विनः सर्वापहारे 'अनिदितामि'त्युपधानकारस्य लोपे 'कृदतिङ्' इति क्विनः कृत्संज्ञ-कत्वात् 'उत् अच्' इत्यस्य 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां शसि अनुबन्धलोपे 'उत् अच् अस्' इति स्थिते तकारस्य जश्त्वेन दकारे 'यचि भम्' इति भसंज्ञायां 'अचः' इत्यल्लोपं प्रबाध्य 'उद ईत्' इति अचोऽकारस्य ईत्वे सस्य रुत्वे विसर्गे 'उदीचः' इति ।

समीचः (ई० ३०)—सम् पूर्वाद् 'अञ्च्' धातोः 'ऋत्विगि' त्यादिना क्विनि

क्विनः सर्वापहारे जाते 'अनिदितां हल उपधायाः क्ङिति' इत्युपधानकारस्य लोपे 'कृदतिङ्' इति क्विनः कृत्संज्ञकत्वात् 'सम् अच्' इत्यस्य 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां शसि अनुबन्धलोपे 'सम् अच् अस्' इति दशायां 'समः समि' इति समः सम्यादेशे 'समि अच् अस्' इति स्थिते 'यचि भम्' इति भसंज्ञायाम् 'अचः' इत्यल्लोपे 'चौ' इति दीर्घे सस्य रुत्वे विसर्गे 'समीचः' इति सिद्धम् ।

तिरश्चः (ई० ३४)—तिरस्पूर्वकाद् 'अञ्च्' धातोः ऋत्विगि'त्यादिना क्विनि क्विनः सर्वापहारे 'अनिदितामि'ति नलोपे 'कृदतिङ्' इति क्विनः कृत्संज्ञकत्वात् 'तिरस् अच्' इत्यस्य 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां शसि अनुबन्धलोपे 'तिरस् अच् अस्' इति स्थिते भसंज्ञायाम् 'अचः' इत्यनेन अल्लोपे 'तिरसस्तिर्यलोपे' इत्यस्य अप्राप्तया स्तोः श्चुना श्चुः' इति सस्य श्चुत्वेन शकारे सस्य रुत्वे विसर्गे 'तिरश्चः' इति ।

तादृक् ( ई० ४१ )—तदुपपदाद् दृश् धातोः 'त्यदादिषु दृशोऽनालोचने कञ्च' इति सूत्रेण चकारात् क्विनि क्विनः ककारस्य 'लशक्वतद्धिते' इत्यनेन नकारस्य 'हलन्त्यम्' इत्यनेन च इत्संज्ञायां लोपे च कृते इकारस्योच्चारणार्थत्वात्तस्मिन् गते वेरपृक्तस्य' इत्यनेन वकारस्य च लोपे कृते क्विनः सर्वापहारे भूते 'आसर्वनाम्नः' इति तच्छब्दस्याकारान्तादेशे सवर्णदीर्घे 'तादृश्' इत्यवस्थायां 'कृदतिङ्' इति क्विनः कृत्संज्ञकत्वात् 'तादृश्' इत्यस्य 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां सौ हल्ङ्यादिना सुलोपे 'क्विन्प्रत्ययस्य कुः' इत्यस्यासिद्धत्वात् 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति षत्वे 'झलां जशोऽन्ते' इति षस्य जश्त्वे डकारे 'क्विन्प्रत्ययस्य कुः' इति डस्य कुत्वेन गकारे 'वावसाने' इति चर्त्वेन ककारे 'तादृक्' इति । चर्त्वाभावे 'तादृग्' इति ।

षण्णाम्—षष्शब्दात् आमि 'षट्चतुर्भ्यश्च' इति नुटि अनुबन्धलोपे 'षष् नाम्' इति स्थिते 'झलां जशोऽन्ते' इति षस्य जश्त्वेन डकारे 'ष्टुना ष्टुः' इति नस्य ष्टुत्वेन णकारे 'प्रत्यये भाषायां नित्यम्' इत्यनेन डकारस्य च णत्वे 'षण्णाम्' इति । 'अत्र 'न पदान्ताट्टोरनाम्' इति ष्टुत्वनिषेधस्तु न 'अनाम्नवतिनगरीणामिति वाच्यम्' इति वार्तिकेन तन्निषेधात् । 'प्रत्यये भाषायां नित्यम्' इत्यत्र नित्यपदोपादानात् 'षड्णाम्' इति प्राचोक्तं द्वितीयं रूपं न युक्तिसहम् ।

पिपठीः ( ई० ४७ )—पिपठिष् शब्दात् सौ हल्ङ्यादिना सुलोपे सति रुत्वे कर्तव्ये 'पूर्वत्राऽसिद्धम्' इति षत्वस्याऽसिद्धत्वात् 'ससजुषो रुः' इति सस्य रुत्वे अनुबन्धलोपे 'पिपठिर्' इति जाते 'र्वोरुपधाया दीर्घ इकः' इति उपधायाः इकारस्य दीर्घे रेफस्य 'खरवसानयो'रिति विसर्गे 'पिपठीः' इति सिद्धम् ।

**पिपठीष्षु** ( ई० ४०, ४१, ४२, ५३ )—पिपठिष् शब्दात् सप्तमीबहुवचने सुपि अनुबन्धलोपे 'पपठिष् सु' इति दशायां 'स्वादिष्वसर्वनामस्थाने' इति पद-संज्ञायां सत्यां षत्वस्यासिद्धत्वात् 'ससजुषो रुः' इति रुत्वे अनुबन्धलोपे 'पिपठिर् सु' इति स्थिते 'र्वोरुपधाया दीर्घ इकः' इति दीर्घे 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे 'पिपठीः सु' इति जाते सत्त्वं बाधित्वा 'वा शरि' इति विसर्गस्य स्थाने पाक्षिके विसर्गे 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति सस्य षत्वे 'पिपठिःषु' इति। 'वा शरि' इति विकल्पपक्षे 'पिपठीः सु' इति दशायां 'विसर्जनीयस्य सः' इति विसर्गस्य सत्वे 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति सुपः सकारस्य षत्वे 'पिपठिस् षु' इति स्थिते 'ष्टुना ष्टुः' इति सकारस्य ष्टुत्वेन षकारे 'पिपठीष्षु' इति सिद्धं भवति।

**विद्वान्**—'विद्' धातोः लटः शतरि 'विदेः शतुर्वसुः' इति शतृस्थाने वस्वादेशे अनुबन्धलोपे 'विद्वस्' इति। तस्य कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुमि उमि गते 'विद्वस् स्' इति जाते 'सान्त-महतः संयोगस्य' इति दीर्घे 'विद्वान्स् स्' इति स्थिते 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्य-पृक्तं हल्' इति विभक्तिसकारस्य लोपे 'संयोगान्तस्य लोपः' इत्यनेन सलोपे 'विद्वान्' इति सिद्धम्। अत्र नलोपस्तु न, संयोगान्तलोपस्याऽसिद्धत्वात्।

**पुमान्** ( ई० ३५ )—'पुंस्' शब्दात् सौ 'पुंसोऽसुङ्' इत्यसुङि अनुबन्धलोपे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुमि उमि गते 'सान्तमहतः संयोगस्य' इति उपधादीर्घे हल्ङ्यादिना विभक्तेः सकारस्य लोपे 'संयोगान्तस्य लोपः' इति सलोपे 'पुमान्' इति।

**पुंसु** ( ई० ४४ )—पुंस्शब्दात् सुपि 'स्वादिष्वि'ति पदत्वात् संयोगान्तलोपे निमित्ताऽपायादनुस्वारस्याऽपि निवृत्तौ 'नश्च' इत्यनुस्वारे 'पुंसु' इति सिद्धम्।

**हे उसनन्** ( ई० ४६ )—'उसनस्' शब्दात् सम्बोधनैकवचने 'उसनस् सु' इति दशायां 'हल्ङ्याब्भ्यः—' इति सोर्लोपे 'अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः' इति वार्तिकेन अनङि नलोपे च कृते 'हे उसन' इति। वाग्रहणान्नलोपाभावे सोर्लोपे अनङि 'हे उसनन्' इति। अनङ्भावे सोर्लोपे सकारस्य रुत्वे विसर्गे 'हे उसनः' इति रूपत्रयं भवति।

**असकौ** ( ई० ५० )—अदस्शब्दाद् 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकचि 'अदकस्' इति, तस्मात् सौ 'अदस औ सुलोपश्च' इत्यनेन 'तन्मध्यपति-

तन्यायेन अदस्शब्देन अदकस्शब्दस्यापि ग्रहणात् नित्यौत्वे प्राप्ते 'औत्वप्रतिषेधे साकच्कस्य वा वक्तव्यः' इति वार्तिकेन तन्निषेधे 'तदोः सः सौ' इति दस्य सत्वे सकारात्परस्याकारस्य 'सादुत्वं च' इत्यनेन उत्वे 'असुकस् स्' इति स्थिते त्यदाद्यत्वे पररूपे सस्य रुत्वे विसर्गे 'असुकः' इति। औत्वप्रतिषेधाऽभावे 'अदकस् स्' इति दशायां सस्य औत्वे सुलोपे च विहिते दस्य सत्वे 'असकौ' इति उक्तं रूपं सिद्धम्। अत्र पक्षे 'सादुत्वं चे'ति न प्रवर्तते, प्रतिषेधसंनियोगसिद्धत्वात्।

**अमुम्** ( ई० ५३ )—'अदस्' शब्दादमि त्यदाद्यत्वे पररूपे 'अमि पूर्वः' इति पूर्वरूपे 'अदसोऽसेर्दादुदोसे मः' इत्युत्वमत्वे 'अमुम्' इति।

**अमुना** ( ई० ४४, ५१, ५२ )—'अदस्' शब्दात् टाविभक्तौ त्यदाद्यत्वे पररूपे च कृते 'अदसोऽसेर्दादुदो मः' इति अकारस्य उत्वे दस्य च मत्वे 'अमु आ' इति दशायाम् नाभावे कर्तव्ये सत्येव 'न मुने' इत्यनेन मुत्वस्यासिद्धत्वाऽभावबोधनात् 'शेषो घ्यसखि' इति घिसंज्ञायाम् 'आङो नाऽस्त्रियाम्' इति 'आ' इत्यस्य नादेशे 'अमुना' इति। नचाऽत्र मुत्वस्याऽसिद्धत्वात् 'सुपि चे'ति दीर्घः कुतो नेति वाच्यम्, 'न मुने' इत्यनेन कृते च नाभावे मुत्वस्य नासिद्धत्वमित्यर्थस्याऽपि तेन विधानात्।

**अमीषाम्** ( ई० ३४ )—'अदस्' शब्दात् आमि त्यदाद्यत्वे पररूपत्वे च कृते 'आमि सर्वनाम्नः सुट्' इति सुटि अनुबन्धलोपे 'बहुवचने झल्येत्' इति एत्वे 'आदेशप्रत्यययोः' इति षत्वे 'एत ईद्बहुवचने' इत्येकारस्य ईत्वे दस्य च मत्वे 'अमीषाम्' इति।

**'अदस्' शब्दस्य त्रिषु लिङ्गेषु रूपाणि ( ई० ३४ )—**

**पुंल्लिङ्गे—**

| | | |
|---|---|---|
| असौ | अमू | अमी |
| अमुम् | अमू | अमून् |
| अमुना | अमूभ्याम् | अमीभिः |
| अमुष्मै | अमूभ्याम् | अमीभ्यः |
| अमुष्मात् | अमूभ्याम् | अमीभ्यः |
| अमुष्य | अमुयोः | अमीषाम् |
| अमुष्मिन् | अमुयोः | अमीषु |

[ त्यदादेः सम्बोधनं नास्ति ]

स्त्रीलिङ्गे—

| | | |
|---|---|---|
| असौ | अमू | अमूः |
| अमुम् | अमू | अमूः |
| अमुया | अमूभ्याम् | अमूभिः |
| अमुष्यै | अमूभ्याम् | अमूभ्यः |
| अमुष्याः | अमूभ्याम् | अमूभ्यः |
| अमुष्याः | अमुयोः | अमूषाम् |
| अमुष्याम् | अमुयोः | अमीषु |

नपुंसके—

| | | |
|---|---|---|
| अदः | अमू | अमूनि |
| अदः | अमू | अमूनि |

( शेषं पुंवत् )

इति हलन्तपुँल्लिङ्गप्रकरणम्

---

# अथ हलन्तस्त्रीलिङ्गप्रकरणम्

उपानत् ( ई० ४७ )—उपानह् शब्दात् सौ हल्ङ्यादिलोपे 'नहो धः' इति हस्य धत्वे 'झलां जशोऽन्ते' इति धस्य जश्त्वे 'वाऽवसाने' इति दस्य चर्त्वे 'उपानत्' इति । चर्त्वाऽभावे 'उपानद्' इति ।

( उपनह्यते इति विग्रहे उपपूर्वात् 'णह्' धातोः 'णो नः' इति नत्वे कृते सम्पदादित्वात् कर्मणि क्विपि क्विपः सर्वापहारे 'नहिवृति-' इति पूर्वपदस्य दीर्घे 'उपानह्' शब्दनिष्पन्नः )

चतसृणाम् ( ई० ३१ )—चतुर्शब्दादामि 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति 'चतसृ' आदेशे 'अचि र ऋतः' इति रेफादेशे प्राप्ते 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति पूर्वविप्रतिषेधेन तम्बाधित्वा 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे 'नामि' इति दीर्घे प्राप्ते 'न तिसृचतसृ' इति निषेधे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे 'चतसृणाम्' इति ।

'चतुर्' शब्दस्य त्रिषु लिङ्गेषु रूपाणि ( ई० ३१ )—
( 'चतुर्' शब्दो नित्यं बहुवचनान्तः )

| | | |
|---|---|---|
| पुंल्लिङ्गे—चत्वारः | चतुरः | चतुर्भिः |
| चतुर्भ्यः | चतुर्भ्यः | चतुर्णाम् |
| | चतुर्षु हे चत्वारः | |

| | | |
|---|---|---|
| स्त्रीलिङ्गे—चतस्रः | चतस्रः | चतसृभिः |
| चतसृभ्यः | चतसृभ्यः | चतसृणाम् |
| | चतसृषु हे चतस्रः | |

| | | |
|---|---|---|
| नपुंसके—चत्वारि | चत्वारि | चतुर्भिः |
| चतुर्भ्यः | चतुर्भ्यः | चतुर्णाम् |
| | चतुर्षु हे चत्वारि | |

इयम् ( ई० ४४, ५२ )—इदम् शब्दात् सौ 'यः सौ' इति इदमो दस्य यत्वे 'त्यदादीनामः' इत्यत्वं बाधित्वा 'इदमो मः' इति इदमो मस्य मत्वे हल्ङ्यादिलोपे 'इयम्' इति ।

अनया ( ई० २१ )—इदम् शब्दात्तृतीयैकवचने त्यदाद्यत्वे पररूपत्वे टापि अनुबन्धलोपे सवर्णदीर्घे 'अनाप्यकः' इति इद्भागस्य अनादेशे 'आङि चापः' इत्या-बन्तस्यैकारे 'एचोऽयवायावः' इत्यैकारस्य आयादेशे 'अनया' इति ।

अस्याः ( ई० ३० )—इदम्शब्दात् ङसि अत्वे पररूपत्वे टापि सवर्णदीर्घे 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याटि आपो ह्रस्वे च कृते 'इदस्या अस्' इति जाते सवर्णदीर्घे 'हलि लोपः' इतीद्भागस्य लोपे सस्य रुत्वे विसर्गे 'अस्याः' इति ।

अद्भिः ( ई० ४०, ४६, ५३ )—अप्शब्दात् भिसि 'अपो भि' इति अपः पकारस्य तकारे 'झलां जशोन्ते' इति जश्त्वे सस्य रुत्वे विसर्गे 'अद्भिः' इति ।

दृक् ( ई० ३२ )—दृश्शब्दात् सौ हल्ङ्यादिलोपे 'व्रश्चभ्रस्ज—'इति शस्य षत्वे षस्य जश्त्वे 'त्यदादिषु दृशोऽनालोचने कञ् च' इति दृशेः क्विन्विधानात् अत्र क्विनोऽभावेऽपि 'क्विन् प्रत्ययस्य कुः' इति डकारस्य कुत्वेन गकारे तस्य 'वाऽवसाने' इति चर्त्वे 'दृक्' इति । चर्त्वाऽभावे 'दृग्' इति ।

अमूभ्याम् ( ई० ४० )—अदस्शब्दात् भ्यामि अत्वे पररूपत्वे टापि सवर्ण-दीर्घे 'अदसोऽसेर्दादु दो मः' इति उत्वे मत्वे च जाते 'अमूभ्याम्' इति ।

अमूष्यै ( ई० ३४ )—अदस्शब्दात् ङेविभक्तौ अत्वे पररूपत्वे टापि सवर्ण-दीर्घे 'अदा ए' इति स्थिते 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याटि आबन्तस्य ह्रस्वे च कृते 'वृद्धिरेऽचि' इति वृद्धौ 'अदसोऽसेर्दादु दो मः' इत्युत्वे मत्वे च विहिते 'आदेशप्रत्यययोः' इति षत्वे 'अमुष्यै' इति ।

इति हलन्तस्त्रीलिङ्गप्रकरणम्

---

# अथ हलन्तनपुंसकलिङ्गप्रकरणम्

चत्वारि ( ई० ३४ )—चतुर्शब्दाद् जसि शसि वा विभक्तौ 'जश्शसो शिः' इति श्यादेशे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायाम् 'चतुरनडुहोरामु-दात्तः' इत्यामि अनुबन्धलोपे 'इको यणचि' इति यणि 'चत्वारि' इति ।

एनत् ( ई० ४० )—इदम्शब्दात् सौ 'अन्वादेशे नपुंसके एनद् वक्तव्यः' इति वार्तिकेन इदम्शब्दस्य एनदादेशे 'स्वमोर्नपुंसकात्' इति सोर्लुकि जश्त्वे चर्त्वे 'एनत्' इति । चर्त्वाऽभावे 'एनद्' इति ।

गोचा ( ई० ४० )—गामञ्चतीति विग्रहे क्विनि क्विनः सर्वापहारे उपपद-समासे सुब्लुकि समासत्वात् प्रातिपदिकसंज्ञायां टाविभक्तौ अनुबन्धलोपे 'गो अञ्च् आ' इति जाते 'अनिदितां हल उपधायाः क्ङिति' इति नलोपे 'यचि भम्' इति भसंज्ञायाम् 'अचः' इत्यलोपे 'गोचा' इति । पूजायान्तु 'नाञ्चेः पूजायाम्' इति नलोप-निषेधे सति 'अवङ्स्फोटायनस्य' इत्यवङि सवर्णदीर्घे 'गवाञ्चा' इति । अवङाभावपक्षे 'सर्वत्र विभाषा गोः' इति प्रकृतिभावे 'गो अञ्चा' इति । प्रकृतिभावाभावपक्षे 'एङः पदान्तादति' इति पूर्वरूपे 'गोऽञ्चा' इति ।

'गवाक्' शब्दस्य रूपाणि—

**प्रथमायां (१६)**—गवाक्–गवाग्–गोअक्–गोअग्–गोऽक्–गोऽग्, गवाङ्–गोअङ्–गोऽङ्(९) गोची–गवाञ्ची–गोअञ्ची–गोऽञ्ची (४) गवाञ्चि–गोअञ्चि–गोऽञ्चि (२) ।

**द्वितीयायां (१६)**—पूर्ववत् ।

**तृतीयायां (१६)**—गोचा-गवाचा–गोअचा-गोऽञ्चा (४) । गवाग्भ्याम्–गोअग्भ्याम्-

गोऽग्भ्याम्, गवाङ्भ्याम्-गोअङ्भ्याम्-गोऽङ्भ्याम् (६)। गवाग्भिः-गोअग्भिः-गोऽग्भिः, गवाङ्भिः-गोअङ्भिः-गोऽङ्भिः (६)।

चतुर्थ्यां (१६)—गोचे-गवाञ्चे-गोअञ्चे-गोऽञ्चे (४)। गवाग्भ्याम्-गोअग्भ्याम्-गोऽग्भ्याम्, गवाङ्भ्याम्-गोअङ्भ्याम्-गोऽङ्भ्याम् (६)। गवाग्भ्यः-गोअग्भ्यः-गोऽग्भ्यः, गवाङ्भ्यः, गोअङ्भ्यः, गोऽङ्भ्यः (६)।

पञ्चम्यां (१६)—गोचः-गवाञ्चः-गोअञ्चः-गोऽञ्चः (४) गवाग्भ्याम्-गोअग्भ्याम्-गोऽग्भ्याम्, गवाङ्भ्याम्-गोअङ्भ्याम्-गोऽङ्भ्याम् (६)। गवाग्भ्यः-गोऽग्भ्यः, गोऽग्भ्यः, गवाङ्भ्यः-गोअङ्भ्यः-गोऽङ्भ्यः (६)।

षष्ठ्यां (१२)—गोचः-गवाञ्चः-गोअञ्चः-गोऽञ्चः (४)। गोचोः-गवाञ्चोः-गोअञ्चोः-गोऽञ्चोः (४)। गोचाम्-गवाचाम्-गोअञ्चाम्-गोऽञ्चाम् (४)।

सप्तम्यां (१७)—गोचि गवाञ्चि-गोअञ्चि-गोऽञ्चि (४)। गोचोः-गवाञ्चोः गोअ·ञ्चोः-गोऽञ्चोः (४)। गवाक्षु-गोअक्षु-गोऽक्षु, गवाङ्क्षु-गोअङ्क्षु-गोऽङ्क्षु, गवाङ्षु-गोअङ्षु-गोऽङ्षु (९)। (सर्वं मिलित्वा १०९ रूपाणि भवन्ति।) तदुक्तं 'गवाक्छब्दस्य रूपाणि०' इत्यादि मूले।

**ददन्ति**—'ददत्' शब्दाज्जसि 'जश्शसोः शिः' इति जसः श्यादेशे अनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इति नुमि प्राप्ते 'नाभ्यस्ताच्छतुः' इति निषेधे कृते 'वा नपुंसकस्य' इति नुमि अनुबन्धलोपे नस्यानुस्वारे परसवर्णे च कृते 'ददन्ति' इति। नुमभावे 'ददति' इति।

**तुदन्ती** (ई० ४३, ५०, ५२)—'तुदत्' शब्दाद् औ विभक्तौ 'नपुंसकाच्च' इति औङः श्यादेशे अनुबन्धलोपे 'तुदत् ई' इति स्थिते 'आच्छीनद्योर्नुम्' इति नुमि अनुबन्धलोपे नस्यानुस्वारे परसवर्णे च कृते 'तुदन्ती' इति। नुमभावे 'तुदती' इति।

**पचन्ती** (ई० ४४, ४७, ५१, ५३)—'पचत्' शब्दाद् औविभक्तौ 'नपुंसकाच्च' इति औङः श्यादेशे अनुबन्धलोपे 'पचत् ई' इति दशायाम् 'शप्श्यनोर्नित्यम्' इति नुमि अनुबन्धलोपे नस्यानुस्वारे परसवर्णे च कृते 'पचन्ती' इति सिद्धम्।

**धनूंषि**—'धनुस्' शब्दाज्जसि विभक्तौ 'जश्शसोः शिः' इति जसः श्यादेशे अनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इति नुमि अनुबन्धलोपे 'सान्तमहतः संयोगस्य' इति सान्तसंयोगस्योपधायाः

दीर्घे 'नश्चापदान्तस्य झलि' इत्यनुस्वारे 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति सस्य षत्वे 'धनूंषि' इति सिद्धम् ।

**पयांसि** (ई० १९२५)—'पयस्' शब्दाज्जसि 'जश्शसोः शिः' इति श्यादेशे अनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इति नुमि अनुबन्धलोपे 'सान्तमहतः संयोगस्य' इति सान्तसंयोगस्योपधाया दीर्घे 'नश्चापदान्तस्य झलि' इत्यनुस्वारे 'पयांसि' इति ।

**सुपुमांसि** ( ई० ५०, ५२ )—'सुपुंस्' शब्दाज्जसि 'जश्शसोः शिः' इति जसः स्थाने श्यादेशे अनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'पुंसोऽसुङ्' इत्यसुङि अनुबन्धलोपे 'सुपुमस् इ' इति स्थिते नपुंसकस्य झलचः' इति नुमि अनुबन्धलोपे 'सान्तमहतः संयोगस्य' इति दीर्घे नस्यानुस्वारे 'सुपुमांसि' इति सिद्धम् ।

इति हलन्तनपुंसकलिङ्गप्रकरणम् ।

---

# अथाऽव्ययप्रकरणम्

**'स्वरादिनिपातमव्ययम्'**—स्वर् आदिर्येषां ते स्वरादयः, ते च निपाताश्चेति समाहारद्वन्द्वः, अव्ययम् इति पृथक् पदम् । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति स्मरणात्–'स्वरादयो निपाताश्च अव्ययसंज्ञाः स्युः' इति सूत्रार्थः ।

**स्मारं स्मारम्** ( ई० ५२ )—स्मृत्वा स्मृत्वा इत्यर्थः । अत्र 'आभीक्ष्ण्ये णमुल् च' इति स्मृधातोर्णमुल् 'अचो ञ्णिति' इति वृद्धिः, रपरत्वम्, 'नित्यवीप्सयोः' इति द्वित्वम्, 'कृन्मेजन्तः' इति मान्तकृदन्तत्वादव्ययत्वम्, सोर्लुक् च ।

**उदेतोः** ( ई० २४)—उत्पूर्वादिण्धातोः 'भावलक्षणे स्थेणकृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्' इति तोसुन्प्रत्ययेऽनुबन्धलोपे गुणे उपसर्गसम्बन्धिनस्तस्य जश्त्वे 'उदेतोस्' इत्यस्य तोसुन्प्रत्ययान्तत्वेन 'क्त्वातोसुन्कसुनः' इत्यनेन अव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' इत्यनेन तस्माद्विहितस्य सोर्लुकि सकारस्य रुत्वे विसर्गे 'उदेतोः' इति सिद्धम् ।

**तत्र शालायाम्** ( ई० ५२ )—तत्रेत्यस्य अव्ययत्वात् 'अव्ययादाप्सुपः' इति आपो लुक् । स्त्रीत्वबोधनाय प्रकृते 'शालायाम्' इत्युक्तम् ।

अत्युच्चैसौ ( ई० ४६ )—उच्चैरतिक्रान्तः इति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः। अत्र समासाद्विहितस्य सुपः अव्ययभूतादुच्चैरशब्दात् परत्वेऽपि ततो विहितत्वाऽभावात् 'अव्ययादाप्सुपः' इति न लुक्। अत्युच्चैरिति समुदायस्य तु नाव्ययत्वम्, स्वरादिगणे उच्चैश्शब्दस्य केवलस्य पाठात्। ननु स्वरादिगणे केवलोच्चैश्शब्दस्य पाठेऽपि तदन्तविधिना 'स्वरादिनिपातमव्ययम्' इत्यनेन अत्युच्चैश्शब्दस्याऽपि अव्ययसंज्ञा कुतो नेति चेन्न, 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति न्यायस्य जागरूकत्वात्।

अव्ययलक्षणम् ( ई० २५ )—

'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥' इति।

त्रिषु लिङ्गेषु, सर्वासु विभक्तिषु, च सर्वेषु वचनेषु, च यत् न व्येति = विकारं न प्राप्नोति, किन्तु सदृशम् = एकप्रकारकम् एव भवति, तद् 'अव्ययम्' इत्यर्थः।

पिधानम्—'पिधानम्' इत्यव्ययपदम्। अत्र 'भागुरि' नामकाचार्यमते अपीत्युपसर्गस्याऽकारस्य लोपे 'अव्ययादाप्सुपः' इति सुलोपे च कृते 'पिधानम्' इति सिद्धं भवति। तदाह मूले—

'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥' इति।

इति सुबन्तप्रकरणं समाप्तम्।

---

# अथ तिङन्ते भ्वादिप्रकरणम्

भवति ( ई० ४८,५० )—भूधातोः 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति खले कपोतन्यायेन कर्तरि दश लकाराः प्राप्ताः, एषु केनाऽत्र भाव्यमित्याकाङ्क्षायां 'वर्तमाने लट्' इति भूधातोर्वर्तमानक्रियावृत्तित्वविवक्षायां लटि अनुबन्धलोपे 'भू ल्' इति दशायां 'लस्य' इत्यधिकृत्य 'तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्' इत्येतेऽष्टादशलादेशाः प्राप्ताः ततश्च 'लः परस्मैपदम्' इत्यनेन अष्टादशानामप्येषां परस्मैपदसंज्ञा सञ्जाता, एवं 'तङानावात्मनेपदम्' इत्यनेन तङ्प्रत्याहारान्तःपतिनां नवानामात्मनेपदसंज्ञा सञ्जाता एवं सति तिबादयः परस्मैपदसंज्ञाः,

तादयश्च आत्मनेपदसंज्ञा, एषां मध्यादत्र परस्मैपदसंज्ञिनः आहोस्विद् आत्मनेपदसंज्ञिनः प्रत्ययाः स्युरिति सन्देहे 'शेषात्कर्तरि परस्मैपदम्' इत्यनेन भूधातोरात्मनेपदनिमित्तहीनत्वात्कर्तरि परस्मैपदं प्राप्तं, ततः परस्मैपदसंज्ञिनां नवानां मध्यात्कतमेन भाव्यमित्याकांक्षायाम् 'तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः' इत्यनेन क्रमात् त्रयाणां त्रिकाणां प्रथममध्यमोत्तमसंज्ञासु जातासु च लब्धप्रथमादिसंज्ञानां तिङस्त्रयाणां वचनानां प्रत्येकमेकवचनद्विवचनबहुवचनसंज्ञासु अत्र प्रथमेन भाव्यम् , उत मध्यमेन आहोस्विद् उत्तमेन इत्याकांक्षायां 'शेषे प्रथमः' इति प्रथमपुरुषो भवितुं युक्तस्तथापि त्रीणि वचनानि, एष्वपि कतमेन भाव्यमित्याकांक्षायां 'द्व्येकयोर्द्विवचनैकवचने' इत्यनेनाऽत्र एकवचनस्य विवक्षायां प्रथमपुरुषे तिपि जाते अनुबन्धलोपे 'भू ति' इति स्थिते तिङ्शित्सार्वधातुकम्' इत्यनेन तिपः सार्वधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इत्यनेन गुणे प्राप्ते 'भूसुवोस्तिङि' इत्यनेन गुणनिषेधे 'कर्तरि शप्' इति शपि अनुबन्धलोपे 'भू अ ति' इति जाते 'तिङ्शित्सार्वधातुकम्' इति शपोऽकारस्य सार्वधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इत्यनेन भुव उकारस्य गुणे 'एचोऽयवायावः' इत्यनेन अवादेशे 'भवति' इति सिद्धम् ।

**बभूव**—( ई० ४७, ५२ )—भूधातोः 'परोक्षे लिट्' इति लिटि इकारटकारयोरित्संज्ञायां लोपे च कृते 'भू ल्' इति स्थिते 'तिप्तस्झि' इति लः स्थाने तिपि तत्स्थाने 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इति णलि अनुबन्धलोपे 'भू अ' इति दशायां नित्यत्वाद्गुणवृद्धी बाधित्वा 'भुवो वुग्लुङ्लिटोः' इति भूधातोर्वुगागमे अनुबन्धलोपे 'भुव् अ' इति जाते 'लिटि धातोरनभ्यासस्य' इति भुवो द्वित्वे 'भुव् भुव् अ' इति दशायां 'पूर्वोऽभ्यासः' इति पूर्वस्य 'भूव्' इत्यस्य अभ्याससंज्ञायां 'हलादिः शेषः' इति वलोपे 'ह्रस्वः' इत्यनेन ह्रस्वे 'भु भूव् अ' इति स्थिते 'भवतेरः' इत्यभ्यासोकारस्य अकारे 'भ भूव् अ' इति स्थिते 'अभ्यासे चर्च' इत्यभ्याससंज्ञकस्य भस्य बकारे 'बभूव' इति सिद्धम् ।

**बभूवतुः** ( ई० ५० )—लिटः तसोऽतुसादेशे वुगादि पूर्ववत् । सकारस्य रुत्वविसर्गौ ।

**बभूविथ** ( ई० ४९, ५३ )—भूधातोः 'परोक्षे लिट्' इति लिटि अनुबन्धलोपे 'भू ल्' इति स्थिते लः स्थाने मध्यम-पुरुषैकवचनविवक्षायां सिपि 'लिट् च' इति सिपः आर्धधातुकसंज्ञायां 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इति सिपस्थला-

देशे अनुबन्धलोपे 'आर्धधातुकस्येड्वलादेः' इति थस्य इडागमे अनुबन्धलोपे 'भू इ थ' इति दशायां 'भुवो वुग् लुङ्लिटोः' इति भुवो वुगागमे अनुबन्धलोपे 'भुव् इ थ' इति जाते 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्यासंज्ञायां 'हलादिः शेषः' इति वलोपे 'ह्रस्वः' इत्यनेन अभ्यासस्य ह्रस्वे 'भु भूव् इ थ' इति जाते 'भवतेरः' इत्यभ्यासस्योकारस्य अकारे 'भ भूव् इ थ' इति स्थिते 'अभ्यासे चर्च' इति भस्य बत्वे 'बभूविथ' इति सिद्धम् ।

**भविता** ( ई० २६ )—भूधातोः 'अनद्यतने लुट्' इति लुटि तत्स्थाने तिपि 'तिङ्शित्सार्वधातुकम्' इति तिपः सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य 'स्यतासीलृलुटोः' इति तास्प्रत्यये 'आर्धधातुकं शेषः' इति तास्प्रत्ययस्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्धलोपे 'भू इ तास् ति' इति दशायां सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'लुटः प्रथमस्य डारौरसः' इति तिपो डादेशे अनुबन्धलोपे डित्वसामर्थ्याद् अभस्यापि टेर्लोपे 'भविता' इति सिद्धम् ।

**भवानि** ( ई० ३० ) भूधातोः 'लोट् च' इति 'आशिषि लिङ्लोटौ' इति वा लोटि तत्स्थाने 'तिप्तस्झि०' इत्यादिना मिपि अनुबन्धलोपे 'भू मि' इति स्थिते 'तिङ्शित्सार्वधातुकम्' इति सार्वधातुकसंज्ञायां 'कर्तरि शप्' इति शपि अनुबन्धलोपे शपः सार्वधातुकत्वात् सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'भव मि' इति दशायां 'लोटो लङ्वत्' इति लङ्कार्यातिदेशेन 'तस्थस्थमिपां तान्तन्तामः' इति मिपोऽमादेशे प्राप्ते तं प्रबाध्य 'मेर्निः' इति मेर्न्यादेशे इकारोच्चारणसामर्थ्यादिकारस्योत्वाऽभावे 'आडुत्तमस्य पिच्च' इत्याटि अनुबन्धलोपे 'अतो दीर्घो यञि' इति दीर्घे 'भवानि' इति सिद्धम् ।

**अभवत्** ( ई० ५२ )—भूधातोः 'अनद्यतने लङ्' इति लङि तिपि सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यङ्गस्य अडागमे 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'इतश्च' इति तिपः इकारलोपे 'अभवत्' इति ।

**भवेत्** ( ई० ३३ )—भूधातोः 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' इति लिङि तत्स्थाने 'तिप्तस्झि०' इत्यादिसूत्रेण तिपि अनुबन्धलोपे 'भू ति' इति स्थिते तिपः सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'भू अ ति' इति स्थिते शित्वात् सार्वधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'भव ति' इति जाते 'इतश्च' इतीकारलोपे 'यासुट्परस्मैपदेषूदात्तो ङिच्च' इति यासुटि अनुबन्ध-

लोपे 'लिङः सलोपोऽनन्त्यस्य' इति यासः सस्य लोपे प्राप्ते तं प्रबाध्य 'अतो येयः' इति यासः स्थाने इयादेशे 'भव इय् त्' इति जाते 'आद्गुणः' इति गुणे 'लोपो व्योर्वलि' इति यलोपे 'भवेत्' इति सिद्धम् ।

भूयात् ( ई० ३४ )—सत्तार्थकभूधातोः 'आशिषि लिङ्लोटौ' इति लिङि तत्स्थाने 'तिप्तस्झि' इत्यादिना तिपि 'लिङाशिषि' इति आर्धधातुकत्वात् शपोऽभावे 'भू ति' इति स्थिते 'यासुट्परस्मैपदेषूदात्तो ङिच्च' इति यासुटि अनुबन्धलोपे 'भू यास् ति' इति दशायां 'इतश्च' इति तिप इकारस्य लोपे 'किदाशिषि' इति यासुटः कित्वेन 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'भूयात्' इति दशायां 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते यासुटः कित्वेन 'क्ङिति चे'ति निषेधे उक्तं रूपं सिद्धम् ।

अभूत् ( ई० ४७, ५१ )—भूधातोः 'लुङ्' इति सूत्रेण लुङि तत्स्थाने 'तिप्तस्झि०' इत्यादिना तिपि अनुबन्धलोपे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमे अनुबन्धलोपे 'इतश्च' इतीकारलोपे 'अ भू त्' इति दशायां 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लुकि सार्वधातुकत्वात 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते 'भुसुवोस्तिङि' इति निषेधे 'अभूत्' इति ।

लिङ्निमित्ते ( ई० ४६ )—'हेतुहेतुमतोर्लिङ्' 'इच्छार्थेषु लिङ्लोटौ' इत्यादि लिङो निमित्तं, तस्मिन् 'लिङ्निमित्ते' । क्रियाया अतिपत्तिः = अनिष्पत्तिः, 'क्रियातिपत्तिः' तस्यां क्रियातिपत्तौ । 'भविष्यति मर्यादावचनेऽवरस्मिन्' इत्यतो भविष्यतीत्यनुवर्तते । ततश्च—'हेतुहेतुमद्भावादिलिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम्' इत्यर्थः पर्यवस्यति । उदाहरणं तु 'सुवृष्टिश्चेद् अभविष्यत् ( सुविष्टिर्भवेच्चेत् ) तदा सुभिक्षम् ( अपि ) अभविष्यत्' इत्यादि ज्ञेयम् । अत्र हेतुहेतुमद्भावगम्यमाने सति लिङर्थे भूधातोर्लृङ् निष्पद्यते ।

संहितैकपदे नित्या ( ई० ४३, ४६ )—१. एकपदे संहिता ( सन्धिः ) नित्या, २. धातु–उपसर्गयोः संहिता नित्या, ३. समासे संहिता नित्या, ४. ( किन्तु ) वाक्ये सा ( संहिता ) विवक्षाम् ( वक्तुः इच्छा विवक्षा ताम् ), अपेक्षते । उदाहरणानि यथा—१. ने + अनम् = नयनम्, २. अधि + आस्ते = अध्यास्ते, ३. शिवस्य + अर्चनम् = शिवार्चनम्, ४. इन्दुमती + उवाच = इन्दुमत्युवाच, इन्दुमती उवाच वेति ( संधिका विषय 'सन्धिचन्द्रिका' में पढ़िये ) ।

**आतत्** ( ई० ४९ )—अत्धातोर्लङि तत्स्थाने तिपि सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'लुङ्लङ्' इति प्राप्तमटं बाधित्वा 'आडजादीनाम्' इत्याडागमे 'आटश्च' इति वृद्धौ 'इतश्च' इति तिपः इकारस्य लोपे 'आतत्' इति ।

**आतीत्** ( ई० ४८, ५०, ५२ )—अत्धातोर्लुङि तत्स्थाने तिपि अनुबन्धलोपे 'इतश्च' इतीकारलोपे 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि इचि गते 'अत् स् त्' इति जाते 'आडजादीनाम्' इत्याटि अनुबन्धलोपे 'आटश्च' इचि वृद्धौ सिचः सकारस्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इतीटि अनुबन्धलोपे 'आत् इ स् त्' इति स्थिते तिपः तकारस्य 'अपृक्त एकाल्प्रत्ययः' इत्यपृक्तसंज्ञायाम् 'अस्तिसिचोऽपृक्ते' इति ईडागमे अनुबन्धलोपे 'आत् इ स् ई त्' इति स्थिते 'इट ईटि' इति सलोपे 'आत् इ ई त्' इति दशायां सलोपस्य त्रैपादिकत्वेन 'पूर्वत्राऽसिद्धम्' इत्यसिद्धत्वेन दीर्घत्वाऽभावे प्राप्ते 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति वार्तिकेन सिज्लोपस्य असिद्धत्वाऽभावेन सवर्णदीर्घे 'आतीत्' इति सिद्धम् ।

**सिषेधिथ**—षिध्धातोर्लिटः सिपिः 'धात्वादेः षः सः' इति सत्वे 'परस्मैपदानाम्–' इति सिपस्थलि द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति अभ्यासावयवधकारस्य लोपे 'सिसिध् थ' इति जाते 'आदेशप्रत्यययोः' इति रास्य षत्वे 'लिट् च' इति थलः आर्धधातुकत्वात् तस्मिन् परे 'आर्धधातुकस्येड्वलादेः' इति थलः इटि अनुबन्धलोपे 'पुगन्त—' इति गुणे 'सिषेधिथ' इति ।

**निषेधति** ( ई० ४८, ५१, ५२ )—'नि' इत्युपसर्गपूर्वकात् षिध्धातोर्लटि 'धात्वादेः षः सः' इति सस्य षत्वे लटः स्थाने तिपि सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'पुगन्तलघूपधस्य च' इति गुणे निसेधति इति स्थिते परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् इति सस्य षत्वे उक्तं रूपं सिद्धम् ।

**न्यषेधत्** ( ई० ५०, ५२ )—'नि' इत्युपसर्गातषिध्धातोर्लङि तिपि अडागमे अनुबन्धलोपे यणि सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'पुगन्तलघूपधस्य च' इति गुणे 'प्राक्सितादड्व्यवायेऽपि' इति सस्य षत्वे 'इतश्च' इति तिप इकारलोपे उक्तं रूपं सिद्धम् ।

**प्रणिगदति** ( ई० ४८, ४९ )—'प्र' 'नि' इत्युपसर्गात् गद्धातोर्लटि तिपि सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'नेर्गदनद—' इति णत्वे 'प्रणिगदति' इति ।

**जगाद** ( ई० ५० )—गद्धातोर्लिटि तत्स्थाने तिपि 'परस्मैपदानाम्०' इति तिपो णलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इति अभ्या-

सत्वे 'हलादिः शेषः' इति दकारस्य लोपे 'कुहोश्चुः' इति अभ्यासगकारस्य चुत्वेन जकारे 'जगद् अ' इति दशायाम् 'अत उपधायाः' इति वृद्धौ 'जगाद' इति सिद्धम् । उत्तमपुरुषे तु 'णलुत्तमो वा' इत्यनेन णलः पाक्षिकत्वे णित्वे सति 'जगाद' 'जगद' इति रूपद्वयं भवतीति विशेषः ।

अगादीत् ( ई० २२, ५० )—गद्धातोर्लुङ्लितिपि 'इतश्च' इतीकारलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि अनुबन्धलोपे 'आर्धधातुकं शेषः' इत्यनेन सस्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इत्यनेन सस्य इटि अनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इत्यनेन तकारस्य ईडागमे 'ईट इटि' इति सलोपे 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति सिज्लोपस्याऽसिद्धत्वाभावेन सवर्णदीर्घे 'अतो हलादेर्लघोः' इति वृद्धौ 'अगादीत्' इति । वृद्ध्यभावे 'अगदीत्' इति ।

प्रणदति ( ई० ४६ )—प्रोपसर्गात् णद्धातोर्लटि 'णो नः' इति णस्य नत्वे लटस्तिपि शपि 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वे तत्सिद्धिः ।

नेदतुः ( ई० ५० )—णद्धातोर्लिटस्तसि 'णो नः' इति धातोर्णस्य नत्वे 'परस्मैपदानाम्' इति तसोऽतुसादेशे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्यासंज्ञायां 'हलादिः शेषः' इत्यन्त्यहलो लोपे 'न नद् अतुस्' इति स्थिते 'अत एकहल्मध्येऽनादेशादेर्लिटि' इति एत्वेऽभ्यासलोपे सस्य रुत्वे विसर्गे 'नेदतुः' इति सिद्धम् ।

नेदिथ ( ई० ४७ )—णद्धातोर्लिटि 'णो नः' इति धातोर्नस्य णत्वे लिटः सिपि सिपो थलि 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां हलादिशेषे 'आर्धधातुकस्येड्वलादेः' इतीटि 'थलि च सेटि' इति एत्वाऽभ्यासलोपे 'नेदिथ' इति ।

चुश्च्योत ( ई० ५२ )—'इर इत्संज्ञा वाच्ये'ति इरित्संज्ञक श्च्युत्धातोर्लिटि तिपि णलि द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'हलादिः शेषः' इति सूत्रं प्रबाध्य 'शर्पूर्वाः खयः' इत्यनेन अभ्यासस्य शर्पूर्वस्य खयः ( 'च्' इत्यस्य ) शेषे अन्यस्य हलः ( 'श्-य्' इत्यनयोः ) लोपे 'पुगन्तलघूपधस्य च' इति गुणे उक्तं रूपं सिद्धम् ।

आनर्च ( ई० ५०, ५१ )—अर्च् धातोर्लिटस्तिपि 'परस्मैपदानाम्' इति तिपो णलि अनुबन्धलोपे 'लिटिधातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः

शेषः' इति हलो लोपे 'अ अच् अ' इति स्थिते 'अत आदेः' इत्यनेन अभ्यासाकारस्य दीर्घे 'तस्मान्नुड्द्विहलः' इति नुड्यनुबन्धलोपे 'आनर्च' इति ।

ववनतुः ( ई० ४३, ४९ )—वन्धातोर्लिटि तसि 'परस्मैपदानाम्—' इति तसोऽतुसि 'लिटि धातोरि'ति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'अत एकहल्मध्येऽनादेशादेर्लिटि' इति एत्वाऽभ्यासलोपे प्राप्ते 'न शसददवादिगुणानाम्' इति निषेधे सस्य रुत्वे विसर्गे 'ववनतुः' इति सिद्धम् ।

चिक्षयिथ, चिक्षेथ ( ई० ४०, ५२ )—क्षिधातोर्लिटि तत्स्थाने सिपि 'परस्मैपदानामि'ति सिपः स्थाने थलादेशे अनुबन्धलोपे 'क्षि थ' इति स्थिते 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्यासादिकार्ये 'चि क्षि थ' इति स्थिते 'क्षिधातोरजन्तत्वात् तासौ नित्यानिट्कत्वाच्च 'ऋतो भारद्वाजस्य' इति भारद्वाजमते इटि अनुबन्धलोपे 'अचि श्नुधातुभ्रुवाम्' इति इयङि 'चिक्षयिथ' इति । इडभावपक्षे गुणे 'चिक्षेथ' इति सिद्धं रूपं भवति ।

क्षीयात् ( ई० ५०, ५१ )—क्षिधातोराशिषि लिङि तत्स्थाने तिपि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इति यासुड्यनुबन्धलोपे 'क्षि यास् त्' इति दशायां 'किदाशिषि' इति यासुटः कित्वेन 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'क्षीयात्' इति सिद्धम् ।

अक्षैषीत् ( ई० ४७ )—क्षिधातोर्लुङि तिपि अनुबन्धलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे मध्ये च्लौ तस्य सिचि इचि गते 'अक्षि स् त्' इति स्थिते 'अस्ति सिचोऽपृक्ते' इति ईटि अनुबन्धलोपे 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ 'आदेशप्रत्यययोः' इति षत्वे 'अक्षैषीत्' इति जातम् ।

क्राम्यति ( ई० ४६ )—क्रम्धातोर्लटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः' इत्यनेन श्यनि अनुबन्धलोपे 'क्रमः परस्मैपदेषु' इति दीर्घे 'क्राम्यति' इति । श्यनोऽभावे शपि 'क्रामति' इति च सिद्धं भवति ।

क्रमिता ( ई० ४९ )—क्रम्धातोर्लुटि तिपि 'स्यतासी लृलुटोः' इति तासि प्रत्यये 'स्नुक्रमोरनात्मनेपदनिमित्ते' इति इटि अनुबन्धलोपे 'लुटः प्रथमस्ये'ति तिपो डादेशो डित्वसामर्थ्यादभस्यापि टेर्लोपे उक्तं रूपं सिद्धम् ।

( स्नुक्रमोः सेट्त्वात् 'आर्धधातुकस्येड्वलादेः' इति इटः सिद्धेः 'स्नुक्रमोरि' ति पुनरिड्विधानं नियमार्थमिति न विस्मर्तव्यम् । )

**अकटीत्** ( ई० ४५ )—कट्धातोर्लुङि तत्स्थाने तिपि अनुबन्धलोपे 'इतश्च' इतीकारलोपे 'लुङ्लङ्' इत्यडागमे मध्ये च्लौ तस्य सिचि अनुबन्धलोपे 'अकट् स् त्' इति जाते सस्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इत्यनेन तस्य ईटि च जाते अनुबन्धलोपे 'अतो हलादेर्लघोः' इति वृद्धौ प्राप्तायां 'ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम्' इति तन्निषेधे 'इट ईटि' इति सिचः सस्य लोपे सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घे 'अकटीत्' इति सिद्धम् ।

**गोपायाञ्चकार, जुगोप** ( ई० ४७, ५०, ५१ )—गुप्धातोः 'परोक्षे लिट्' इति लिटि प्राप्ते तं प्रबाध्य 'गुपूधूपविच्छिपणिपनिभ्य आयः' इति नित्यम् आयप्रत्यये प्राप्ते तम्बाधित्वा 'आयादय आर्धधातुके वा' इति विकल्पेन आयप्रत्यये कृते तस्यार्धधातुकत्वात् 'पुगन्तलघूपधस्य च' इति गुणे 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां लिटि 'कास्यनेकाच आम् वक्तव्यः' इत्याम्प्रत्यये कृते आमो मकारस्येत्संज्ञायां लोपे च 'लिटि आस्कासोराम्विधानान्मकारस्येत्वाभावेन लोपाभावे 'गोपाय आम् लिट्' इति स्थिते आम्प्रत्ययस्यार्धधातुकसंज्ञायाम् 'अतो लोपः' इत्यल्लोपे 'गोपाय् आम् लिट्' इति जाते 'आमः' इति लिटो लुकि लिटः कृत्वात्प्रत्ययलक्षणेन गोपायामित्यस्य कृदन्तत्वात्प्रातिपदिकत्वेन सुबुत्पत्तौ 'कृन्मेजन्तः' इति अव्ययत्वात् 'अव्ययादाप्सुपः' इति तस्यापि लुकि गोपायामित्यवशिष्टे 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे 'गोपायाम् कृ लिट्' इति जाते लिटस्तिपि तिपो णलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति कृञो द्वित्वे 'गोपायाम् कृ कृ अ' इति भूते 'पूर्वोऽभ्यासः' इति पूर्वस्य कृञोऽभ्याससंज्ञायाम् 'उरत्' इत्यभ्यासऋवर्णस्य अकारे 'उरण् रपरः' इति रपरे च कृते 'गोपायाम् कर् कृ अ' इति जाते 'हलादिः शेषः' इति रलोपे 'कुहोश्चुः' इत्यनेन अभ्यासककारस्य चुत्वेन चकारे मस्य पदान्तत्वादनुस्वारे परसवर्णे 'अचो ञ्णिति' इति वृद्धौ रपरत्वे च कृते 'गोपायाञ्चकार' इति । आयप्रत्ययाभावे 'जुगोप' इति च सिद्धं रूपं भवति ।

**जुगोपिथ** ( ई० ४८ )—गुप्धातोरायप्रत्ययाभावपक्षे लिटि तत्स्थाने सिपि सिपस्थलादेशे अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इत्यनेन अन्त्यहलो लोपे 'कुहोश्चुः' इति चुत्वे 'पुगन्तलघूपधस्य च' इति गुणे 'स्वरतिसूतिसूयतिधूञूदितो वा' इत्यनेन वैकल्पिके इडागमे अनुबन्धलोपे 'जुगोपिथ' इति । इडभावपक्षे 'जुगोप्थ' इति च सिद्धं भवति ।

**अगोपायीत्** ( ई० ४४ )—गुप्धातोः 'आयादय आर्धधातुके वा' इत्यायप्रत्यये 'पुगन्ते'ति गुणे 'गोपाय' इति, तस्मात् 'सनाद्यन्ता धातवः' इति धातुत्वाल्लुङि 'लुङ्लङ्' इत्यडागमे लुङः स्थाने तिपि मध्ये च्लौ तस्य सिचि अनुबन्धलोपे 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे तस्य 'अस्तिसिचोऽपृक्ते' इति ईडागमे अनुबन्धलोपे 'अतो लोपः' इत्यल्लोपे 'इट ईटि' इति सलोपे सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घे 'अगोपायीत्' इति सिद्धम् ।

**अगोपीत्** ( ई० ४९ )—गुप्धातोरायप्रत्ययाऽभावपक्षे लुङि तत्स्थाने तिपि अनुबन्धलोपे 'इतश्च' इतीकारलोपे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमे अनुबन्धलोपे 'अगुप् त्' इति स्थिते 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि अनुबन्धलोपे 'अगुप् स् त्' इति जाते 'स्वरतिसूतिसूयतिधूञूदितो वा' इति विभाषया इटि अनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि अनुबन्धलोपे 'अगुप् इ स् ई त्' इति स्थिते 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अगुप् ई त्' इति दशायां 'वदव्रजहलन्तस्याचः' इति वृद्धौ प्राप्तायां 'नेटि' इति निषेधे 'पुगन्तलघूपधस्य च' इति गुणे 'अगोपीत्' इति । इडभावपक्षे 'वदव्रजे'ति वृद्धौ 'अगौप्सीत्' इति च सिद्धं भवति ।

**अगौप्ताम्** ( ई० ५२ )—गुप्धातोर्लुङि प्रथमपुरुषद्विवचने आयप्रत्ययपक्षे 'अगोपायिष्टाम्' इति । आयप्रत्ययाऽभावपक्षे 'स्वरतिसूती'ति इटि 'अगोपिष्टाम्' इति । इडभावपक्षे 'अगौप्ताम्' इति । तथाहि—लुङः स्थाने तसि तसस्तामादेशे 'लुङ्लङे'त्यडागमे अनुबन्धलोपे मध्ये च्लौ तस्य सिचि अनुबन्धलोपे 'अगुप् स् ताम्' इति स्थिते 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'झलो झलि' इति सलोपे 'अगौप्ताम्' इति सिद्धम् ।

**अजन्तोऽकारवान्वा** ( ई० ४३, ४५ )—१. 'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि' २. 'अचस्तास्वत्थल्यनिटो नित्यम्' ३. 'उपदेशेऽत्वतः' ४. 'ऋतो भारद्वाजस्य' इति सूत्रचतुष्टयानां प्रवृत्तिः संक्षेपेण वाचयति—'अजन्ते'ति । यो धातुः ऋदन्तभिन्नोऽजन्तः ( पा, या, वादि ) ह्रस्वाऽकारवान् वा ( पचादि ) तासौ नित्याऽनिट्, सोऽयं थलि विकल्पितेट्कः । तेन 'पपिथ—पपाथ, पेचिथ—पपक्थ, इत्यादि रूपाणि भवन्ति । 'ऋदन्त ईदृक्'—'इदृक्' इत्यस्य तासौ नित्यानिट् इत्यर्थः । यः ऋदन्तस्तासौ नित्यानिट् स थलि नित्यानिट् इत्यर्थः । ( 'अचस्तास्वत्थल्यनिटो नित्यम्' इति पाणिनिमते, 'ऋतो भारद्वाजस्य' इति भारद्वाजमतेऽपि तस्य अनिट्कत्वादिति भावः ) तेन चकर्थ, जहर्थ, इत्यादि रूपाणि भवन्ति । क्रादन्यः—कृसृभृवृस्तुद्रु-

व्यतिरिक्तो धातुः लिटि नित्यं सेडित्यर्थः । ( क्रादिष्टभ्य एव परस्य लिटि नेडिति 'कृसृभृवृ' इति सूत्रेण नियमितत्वादिति भावः ) तेन पेचिव, पेचिम । जह्निव, जह्निम, इत्यादि रूपाणि भवन्ति ।

स्नुक्रमोः—आत्मनेपदनिमित्तहीनाभ्यामाभ्यां परस्य वलादेरार्धधातुकस्येडित्यर्थः ।

अक्रमीत्—क्रमधातोर्लुङि तिपि 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ च्लेः सिचि अनुबन्धलोपे 'इतश्च' इति इकारलोपे 'आर्धधातुकस्येड्वलादेः' इत्यनेन सस्य 'अस्तिसिचोऽपृक्ते' इत्यनेन तस्य च ईटि अनुबन्धलोपे 'अक्रम् इ स् ई त्' इति जाते 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अक्रमीत्' इति । 'अतो हलादेर्लघोः' इति वृद्धिस्तु न, 'ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम्' इति निषेधात् ।

आचामति ( ई० ५३ )—आङुपसर्गात् चम्धातोर्लटि तिपि शपि अनुबन्धलोपे 'आङि चम इति वक्तव्यम्' इति वार्तिकेन दीर्घे 'आचामति' इति ।

स्खालीत् ( ई० ४० ) स्खल्धातोर्लुङि तिपि अडागमे मध्ये च्लौ सिचि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'अतो ल्रान्तस्य' इति दीर्घे 'आर्धधातुकस्येड्वलादेः' इति सस्य इटि 'अस्ति सिचोऽपृक्ते' इति तस्य च ईटि 'इट ईटि' इति सलोपे सवर्णदीर्घे उक्तं रूपं सिद्धम् ।

पिबति ( ई० ५१ )—पाधातोर्लटि तिपि शपि अनुबन्धलोपे 'पाघ्राध्मा' इत्यादिसूत्रेण 'पा' इत्यस्य पिबादेशे उक्तं रूपं सिद्धम् ।

पपतुः ( ई० ५० )—पाधातोर्लिटस्तसि, तसोऽतुसि द्वित्वे अभ्यासत्वे ह्रस्वत्वे च विहिते 'प पा अतुस्' इति स्थिते 'असंयोगाल्लिट् कित्' इति अतुसः कित्वे 'आतो लोप इटि च' इति आकारलोपे सस्य रुत्वे विसर्गे 'पपतुः' इति ।

पपिथ ( ई० ४५ )—पाधातोर्लिटः सिपि थलि अनुबन्धलोपे द्वित्वे अभ्यासत्वे च कृते 'ऋतो भारद्वाजस्य' इति भारद्वाजमते इटि 'आतो लोप इटि च' इति आकारलोपे 'पपिथ' इति । इडभावे 'पपाथ' इति च भवति ।

अपुः ( ई० ५२ )—पाधातोर्लुङि तत्स्थाने झौ 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे मध्ये च्लौ तस्य सिचि इचि गते 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लुकि 'अपा झि' इति स्थिते 'आतः' इति नियमात् झेर्जुसि अनुबन्धलोपे 'उस्यपदान्तात्' इति पररूपे सकारस्य रुत्वे विसर्गे 'अपुः' इति सिद्धम् ।

ग्लेयात् ( ई० ४३ )—ग्लैधातोराशीर्लिङि तिपि अनुबन्धलोपे 'लिङाशिषि' इत्यार्धधातुकत्वात् शबभावे यासुटि अनुबन्धलोपे 'आदेच उपदेशेऽशिति' इत्यात्वे तिप इकारलोपे 'ग्ला यास् त्' इति स्थिते 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'वाऽन्यस्य संयोगादेः' इत्येत्वे 'ग्लेयात्' इति । एत्वाऽभावे 'ग्लायात्' इति बोध्यम् ।

अग्लासीत् ( ई० ४८ )—ग्लैधातोर्लुङि तिपि अनुबन्धलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'आदेच उपदेशेऽशिति' इत्यात्वे मध्ये च्लौ तस्य सिचि इचि गते 'अग्ला स् त्' इति स्थिते 'यमरमनमातां सक् च' इति सकि सिचः सकारस्य इटि च कृते अनुबन्धलोपे 'अग्ला स् इ त्' इति दशायाम् 'अस्तिसिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि अनुबन्धलोपे 'इट ईटि' इति सलोपे 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घे तत्सिद्धिः ।

अदधत्, अधात्, अधासीत् ( ई० ४९, ५० )—'धेट् पाने' अस्माद्धातोर्लुङि तिप्यनुबन्धलोपे 'आदेच उपदेशेऽशिति' इत्यात्वे मध्ये च्लौ तस्य सिजादेशे प्राप्ते तं प्रबाध्य 'विभाषा धेट्श्व्योः' इति चङि अनुबन्धलोपे 'चङि' इति द्वित्वे अभ्याससंज्ञायां ह्रस्वे 'अभ्यासे चर्च' इति जश्त्वे 'आतो लोप इटि च' इत्याल्लोपे 'इतश्च' इति तिप इकारलोपे 'अदधत्' इति । चङभावे च्लेः सिजादेशे 'विभाषा घ्राधेट्शाच्छासः' इति सिचो लुकि 'अधात्' इति । लुगभावपक्षे 'यमरमनमातां सक् च' इति च्लेः सकि सिचः सस्य 'आर्धधातुकस्य वलादेः' इति इटि 'अस्तिसिचोऽपृक्ते' इति तस्य च ईटि 'इट ईटि' इति सलोपे 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घे 'अधासीत्' इति च सिद्धं भवति ।

दायात् ( ई० ४० )—'दैप शोधने' अस्माद्धातोराशीर्लिङि तिपि अनुबन्धलोपे 'आदेच उपदेशेऽशिति' इत्यात्वे 'इतश्च' इति तिप इकारलोपे 'लिङाशिषि' इत्यार्धधातुकत्वात् 'लिङः सलोपोऽनन्त्यस्य' इत्यस्याऽप्राप्त्या 'किदाशिषि' इति यासुटः कित्वात् 'स्कोः संयोगाद्योः—' इति सलोपे 'दाधाघ्वदाप्' इत्यत्रऽदाप् इति पर्युदासेन घुत्वाऽभावात् 'एर्लिङ्' इति एत्वाभावे 'दायात्' इति ।

स्थेयात् ( ई० ४२ )—'ष्ठा गतिनिवृत्तौ' अस्माद्धातोर्लिङि तिपि 'धात्वादेः षः सः' इति सत्वे ष्टुत्वनिवृत्तौ 'स्था ति' इति स्थिते यासुटि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'स्कोः संयोगाद्योः' इति सलोपे 'एर्लिङि' इत्येत्वे 'स्थेयात्' इति ।

**ननंष्ठ** ( ई० ५०, ५२ ) णशधातोर्लिटः सिपि थलि अनुबन्धलोपे 'णो नः' इति धातोर्णस्य नत्वे 'लिटि धातोरि'ति द्वित्वे अभ्यासत्वे हलादिशेषे 'रधादिभ्यश्च' इति विभाषया इटि अनुबन्धलोपे 'थलि च सेटि' इत्येत्वे अभ्यासलोपे 'नेशिथ' इति । इडभावपक्षे 'मस्जिनशोर्झलि' इति नुमि 'व्रश्चभ्रस्ज–' इति षत्वे ष्टुत्वे नस्यानुस्वारे 'ननंष्ठ' इति ।

**ररन्ध** ( ई० ४२ )—रध्धातोर्लिटि तिपि णलि द्वित्वे अभ्यासत्वे हलादिशेषे 'रधिजभोरचि' इति नुमि 'ररन्ध' इति ।

**ररन्धिव, रेध्व** ( ई० ४२, ४५ )—रध्धातोर्लिटि वसि 'परस्मैपदानाम्–' इति वसो वादेशे द्वित्वे अभ्यासत्वे हलादिशेषे 'रधादिभ्यश्च' इति विभाषया इटि 'रधिजभोरचि' इति नुमि 'ररन्धिव' इति । इडभावपक्षे 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाभ्यासलोपे 'रेध्व' इति ।

**रधिता** ( ई० ४४ )—रध्धातोर्लुटि तिपि तिपो डादेशे 'रधादिभ्यश्च' इति वेटि 'नेट्यलिटि रधेः' इत्यनेन 'रधिजभोरचि' इति प्राप्तस्य नुमो निषेधे 'रधिता' इति । इडभावपक्षे 'रद्धा' इति भवति ।

**अरधत्** ( ई० ४६ )—रध्धातोर्लुङि तिपि अडागमे अनुबन्धलोपे तिप इकारलोपे च्लौ 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इति च्लेरङि 'रधिजभोरचि' इति नुमि 'अनिदिताम्–' इति नलोपे 'अरधत्' इति ।

**अतर्पीत्** ( ई० ५३ ) 'तृप् प्रीणने' इत्यस्माद्धातोर्लुङि तिपि अडागमे तिप इकारलोपे च्लौ 'स्पृशमृशकृषतृप–' इति विभाषया च्लेः सिचि सस्य 'रधादिभ्यश्च' इति इटि तस्य च 'अस्तिसिचोऽपृक्ते' इति ईटि 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अतर्पीत्' इति । 'रधादिभ्यश्च' इत्यस्य विकल्पपक्षे 'वदव्रज–' इति वृद्धौ 'अतार्प्सीत्' इति । 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यनेन अमृपक्षे यणि कृते 'अत्राप्सीत्' इति । 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इत्यङ्पक्षे 'अतृपत्' इति च सिद्धं भवति ।

**भ्रेमतुः** ( ई० ४० ) 'भ्रमु अनवस्थाने' इत्यस्माद्धातोर्लिटि तसि अतुसि द्वित्वे अभ्यासादिकार्ये 'वा जॄभ्रमुत्रसाम्' इत्येत्वाभ्यासलोपे सस्य रुत्वे विसर्गे 'भ्रेमतुः' इति । पक्षे 'बभ्रमतुः' इति ।

चक्षन्थ ( ई० ४२ )—'क्षसु हसने' इत्यस्माद्धातोर्लिटि थलि द्वित्वादिकार्ये ऊदित्त्वात् वेटि 'चक्षमिथ' इति । इडभावे अनुस्वारे परसवर्णे 'चक्षन्थ' इति ।

आस्थत् ( ई० ४० )—असूधातोर्लुङस्तिपि च्लौ 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इति च्लेरङि 'अस्यतेस्थुक्' इति थुकि आटि वृद्धौ तिप इकारलोपे 'आस्थत्' इति ।

दिदीये ( ई० ४७, ४९, ५२ )—'दीङ् क्षये' इत्यस्माद्धातोर्लिटि प्रथमपुरुषैकवचने आत्मनेपदे ते 'लिटि धातोरि'ति द्वित्वे अभ्यासत्वे 'ह्रस्वः' इति ह्रस्वे 'दि दी त' इति स्थिते लिटस्तझयोरेशिरेच्' इति तस्य एशि अनुबन्धलोपे 'दिदीए' इति स्थिते 'दीङो युडचि क्ङिति' इत्यजादेरार्धधातुकस्य युटि तस्यासिद्धत्वात् 'एरनेकाचः' इति परत्वाद् यणि प्राप्ते 'वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ' इति वार्तिकेनासिद्धत्वाऽभावात् युटि उटि गते 'दिदीये' इति सिद्धम् ।

अदास्त ( ई० ४१ )—'दीङ् क्षये' इत्यस्माद्धातोर्लुङि प्रथमपुरुषैकवचने आत्मनेपदे ते 'लुङ्लुङ्' इत्यडागमे अनुबन्धलोपे च्लौ च्लेः सिचि अनुबन्धलोपे 'मिनातिमिनोतिदीङां ल्यपि च' इत्यनेन आत्वे 'अ दा स् त' इति स्थिते 'दाधाध्वदाप्' इति घुसंज्ञायां 'स्थाघ्वोरिच्च' इति इत्वे प्राप्ते 'स्थाघ्वोरित्वे दीङः प्रतिषेधः' इति तन्निषेधे 'अदास्त' इति सिद्धम् ।

अजनि—( ई० ४४, ४६, ४७, ५३ )—'जनी प्रादुर्भावे' इति धातोर्लुङस्तादेशे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ दीपजनबुधपुरितायिप्यायिभ्योऽन्यतरस्याम्' इति विभाषया च्लेश्चिणि अनुबन्धलोपे 'अजन् इ त' इति स्थिते 'अत उपधायाः' इति वृद्धौ प्राप्तायां 'जनिवध्योश्च' इति निषेधे 'चिणो लुक्' इति तलोपे 'अजनि' इति चिणोऽभावपक्षे च्लेः सिचि 'आर्धधातुकस्येड्वलादेः' इति इटि षत्वे ष्टुत्वे 'अजनिष्ट' इति भवति ।

अदीपि ( ई० ४०, ५० )—'दीपी दीप्तौ' अस्माद्धातोर्लुङस्तादेशे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ 'दीपजनबुधपुरितायिप्यायिभ्योऽन्यतरस्याम्' इति विभाषया च्लेश्चिणि अनुबन्धलोपे 'चिणो लुक्' इति चिणः परस्य तशब्दस्य लुकि 'अदीपि' इति । चिणभावपक्षे च्लेः सिचि इटि षत्वे ष्टुत्वे 'अदीपिष्ट' इति च सिद्धं भवति ।

अपादि ( ई० ४८ )—'पद् गतौ' इति धातोर्लुङस्तादेशे अटि अनुबन्धलोपे च्लौ 'चिण् ते पदः' इति च्लेश्चिणि अनुबन्धलोपे 'चिणो लुक्' इति चिणः परस्य तशब्दस्य लुकि 'अत उपधायाः' इति वृद्धौ 'अपादि' इति सिद्धम् ।

अबोधि ( ई० २६ )—बुध्धातोर्लुङस्तादेशे अडागमे अनुबन्धलोपे च्लौ 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इति च्लेश्चिणि 'चिणो लुक्' इति तशब्दस्य लुकि 'पुगन्तलघूपधस्य च' इति गुणे 'अबोधि' इति । चिणभावपक्षे-च्लेः सिचि इचि गते 'झलो झलि' इति सलोपे 'झषस्तथोर्धोऽधः' इति तस्य धत्वे 'झलां जश् झशि' इति धस्य जस्त्वेन दकारे 'अबुद्ध' इति ।

स्रष्टा ( ई० २८ )—सृज धातोर्लुटस्तादेशे तासि प्रत्यये तकारस्य डात्वे डित्वसामर्थ्याद्भस्यापि टेर्लोपे 'सृजिदृशोर्झल्यमकिति' इत्यमि अनुबन्धलोपे 'स्र अ ज् ता' इति भूते यणि 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति षत्वे ष्टुत्वे 'स्रष्टा' इति जातम् ।

असृष्ट—'सृज् विसर्गे' अस्माद्धातोर्लुङस्तादेशे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ च्लेः सिचि अनुबन्धलोपे 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्वाद्गुणाऽभावे 'सृजिदृशोर्झल्यमकिति' इत्यस्याप्यप्राप्ते 'झलो झलि' इति सिचः सस्य लोपे 'व्रश्चभ्रस्जसृजमृज' इति षत्वे ष्टुत्वे 'असृष्ट' इति सिद्धम् ।

ननद्ध ( ई० २५ )—'णह् बन्धने' अस्माद्धातोर्लिटि 'णो नः' इति धातोर्णस्य नत्वे लिटः सिपि सिपस्थलि 'लिटि धातोः' इति द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यभ्याससम्बन्धिहस्य लोपे 'न नह् थ' इति स्थिते 'ऋतो भारद्वाजस्य' इति इटि 'थलि च सेट्' इति एत्वेऽभ्यासलोपे च कृते 'नेहिथ' इति । इडभावपक्षे 'न नह् थ' इति स्थिते 'नहो धः' इति हस्य धत्वे 'झषस्तथोर्धोऽधः' इति थस्य धत्वे 'झलां जश् झशि' इति जश्त्वेन पूर्वधकारस्य दकारे 'ननद्ध' इति सिद्धं भवति ।

लाता ( ई० ४५, ५१ )—लीधातोर्लुटस्तादेशे तासिप्रत्यये 'लुटः प्रथमस्ये' ति तस्य डादेशे अनुबन्धलोपे डित्वसामर्थ्यात् अभस्यापि टेर्लोपे 'विभाषा लीयते' इत्यात्वे 'लाता' इति । पक्षे गुणे 'लेता' इति ।

इति दिवादिप्रकरणम् ।



# अथ स्वादिप्रकरणम्

**असावीत्-असोष्ट** ( ई० ४२, ५० )—'षुञ्' धातोर्लुङि प्रथमपुरुषैकवचने लुङस्तिपि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'धात्वादेः षः सः' इति सत्वे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ च्लेः सिचि इचि गते 'अ सु स् त्' इति स्थिते 'स्तुसुधूञ्भ्यः परस्मैपदेषु' इति सिचः सस्य इटि 'अस्तिसिचोऽपृक्ते' इत्यनेन अपृक्तसंज्ञकस्य तिपस्तकारस्य ईटि 'इट ईटि' इति सलोपे 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ सवर्णदीर्घे 'असावीत्' इति । आत्मनेपदे 'सार्वधातुकार्धधातुकयोः' इति गुणे षत्वे ष्टुत्वे 'असोष्ट' इति सिद्धं भवति ।

**चिकाय** ( ई० ४७ ) 'चिञ् चयने' इत्यस्माद्धातोर्लिटि तिपि णलि 'लिटि धातोः–' इति द्वित्वे अभ्यासत्वे 'चि चि अ' इति स्थिते 'विभाषा चेः' इति अभ्यासात्परस्य चकारस्य कुत्वे 'चि कि अ' इति जाते 'अचो ञ्णिति' इति वृद्धौ आयादेशे 'चिकाय' इति कुत्वाऽभावे 'चिचाय' इत्यपि सिद्धं भवति ।

**स्तृषीष्ट** ( ई० ४५ )—स्तृधातोराशीर्लिङि तादेशे सीयुटि 'सुट्तिथोः' इति सुटि 'ऋतश्च संयोगादेः' इति विकल्पेन इटि 'गुणोर्तिसंयोगाद्योः' इति गुणे उभयोः सकारयोः षत्वे ष्टुत्वे 'स्तरिषीष्ट' इति । पक्षे 'उश्चे'ति कित्वात् गुणाभावे 'स्तृषीष्ट' इति ।

**स्तरिष्ट, अस्तृत** ( ई० ४८ ) स्तृधातोर्लुङि लुङस्तादेशे अटि च्लौ 'ऋतश्च संयोगादेः' इति विभाषया इटि गुणे रपरत्वे सस्य षत्वे ष्टुत्वे 'स्तरिष्ट' इति पक्षे ह्रस्वादङ्गात्' इति सिज्लोपे 'अस्तृत' इति । गुणस्तु न 'उश्चे'ति निषेधात् ।

**दुधविथ**—'धूञ् कम्पने' इति धातोर्लिटः सिपि थलि अनुबन्धलोपे 'लिटि धातोः' इति द्वित्वे अभ्यासत्वे 'ह्रस्वः' इत्यनेन अभ्यासस्य ह्रस्वे 'अभ्यासे चर्च' इति अभ्यासधकारस्य जश्त्वे दकारे 'दु धू थ' इति स्थिते 'स्वरतिसूतिसूयतिधूञूदितो वा' इति वेटि अनुबन्धलोपे 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'दुधविथ' इति सिद्धम् । इडभावे गुणे 'दुधोथ' इति च भवति ।

**दुधुविव** ( ई० ४९ )—ञकारेत्संज्ञक धूधातोर्लिटः स्थाने वसि वसो 'व' आदेशे धातोर्द्वित्वे अभ्यासत्वे ह्रस्वे 'अभ्यासे चर्च' इति अभ्यासधकारस्य जश्त्वे 'दु धू व' इति जाते 'असंयोगाल्लिट् कित्' इत्यनेन 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेन 'स्वरतिसूतिसूयतिधूञूदितो वा' इति परत्वात् विभाषया प्राप्तस्येटो निषेधेऽपि क्रादिनियमान्नित्यमिटि अनुबन्धलोपे 'दु धू इ व'

इति स्थिते 'अचिश्नुधातुभ्रुवाम्' इति उवङि अनुबन्धलोपे 'दुधुविव' इति जातम् ।

अधावीत् ( ई० ३२ )—'धूञ्' धातोर्लुङि प्रथमपुरुषैकवचने लुङ्स्थाने तिपि अनुबन्धलोपे 'लुङ्लङ्' इति अडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे च्लौ च्लेः सिचि इचि गते 'अ धू स् त्' इति स्थिते 'स्तुसुधूञ्भ्यः परस्मैपदेषु' इति सिचः परत्वान्नित्यमिटि 'अस्तिसिचोऽपृक्ते' इति अपृक्त-संज्ञकस्य तकारस्य ईटि 'इट ईटि' इति सलोपे 'सिच वृद्धिः परस्मैपदेषु' इति वृद्धौ आवादेशे सवर्णदीर्घे 'अधावीत्' इति ।

ववरिथ ( ई० ५० )—'वृञ् वरणे' इत्यस्माद्धातोर्लिटि थलि द्वित्वादिकार्ये इटि गुणे 'ववरिथ' इति । अत्र क्रादिनियमादिट्निषेधः कुतो नेति चेदुच्यते—'बभूथाऽऽततन्थजगृम्भववर्थेति निगमे'—निगमे=वेदे, बभूव-आततन्थ-जगृम्भ-ववर्थ एते निपाताः स्युरित्यर्थः । अतः वृञ्धातोर्लिटि परतः थलि 'ववर्थे'ति निपातः । किन्तु तादृशगुणविशिष्टेडागमरहितो निपातः केवलं वेदे एव प्रसज्येत । लोके त्वत्र क्रादित्वेऽपि इण्निषेधो नेति ।

वरिषीष्ट ( ई० ५३ )—वृधातोराशीर्लिङि तङि सीयुटि सुटि 'वृ सी स् त' इति स्थिते 'लिङ्सिचोरात्मनेपदेषु' इति विकल्पेन इटि गुणे रपरत्वे उभयोः सकारयोः षत्वे ष्टुत्वे 'वरिषीष्ट' इति। इडभावे 'उश्च' ति कित्वाद्गुणनिषेधे 'वृषीष्ट' इति च भवति ।

प्रहिणोति ( ई० ५१, ५२ )—प्रोपसर्गात् 'हि गतौ' इत्यस्माद्धातोर्लटि 'स्वादिभ्यः श्नुः' इति श्नौ गुणे 'हिनुमीना' इति णत्वे 'प्रहिणोति' इति ।

जिघाय ( ई० ४०, ४१, ४४, ४८ )—हिधातोर्लिटि तिपि णलि द्वित्वे अभ्यासत्वे 'अभ्यासे चर्च' इति चर्त्वे 'हेरचङि' इति अभ्यासात् परस्य हस्य कुत्वेन घकारे वृद्धौ आयादेशे 'जिघाय' इति ।

देभतुः ( ई० ४५, ५१ )—दम्भ्धातोर्लिटि तसि अतुसि द्वित्वे 'श्रन्थिग्रन्थि-दम्भिस्वञ्जीनां लिटः कित्वं वा' इति कित्वपक्षे 'अनिदिताम्–' इति नलोपे तस्य आभीयत्वादसिद्धत्वेन 'अत एकहल्मध्ये–' इत्येत्वाप्राप्त्या 'दम्भेश्च' इति एत्वा-भ्यासलोपे सस्य रुत्वे विसर्गे 'देभतुः' इति । पक्षे 'ददम्भतुः' इति ।

आनशे ( ई० ४९ )-अश्धातोर्लिटि तङि द्वित्वे अभ्यासत्वे हलादिशेषे 'अत आदेः' इत्यभ्यासस्य दीर्घे 'अश्नोतेश्च' इति नुटि 'लिटस्तझयोः–' इत्येशि 'आनशे' इति ।

इति स्वादिप्रकरणम् ।



# अथ तुदादिप्रकरणम्

**बभर्ज** ( ई० ४८ ) भ्रस्ज्धातोर्लिटि तिपि णलि द्वित्वे अभ्यासत्वे हलादिशेषे 'अभ्यासे चर्च' इति भस्य बत्वे 'भ्रस्जो रोपधयोरमन्यतरस्याम्' इति रेफस्योपधाभूतस्य सकारस्य च रमागमे अमावितौ 'बभर्ज' इति । रमोऽभावे तु सस्य श्चुत्वेन शत्वे 'झलां जश् झशि' इति शस्य जश्त्वेन जत्वे 'बभ्रज्ज' इति ।

**बभर्जिथ** :( ई० ३४ )—भ्रस्ज्धातोर्लिटि सिपि थलि द्वित्वे अभ्यासत्वे हलादिशेषे 'अभ्यासे चर्च' इति अभ्यासभकारस्य बकारे 'भ्रस्जो रोपधयोरमन्यतरस्याम्' इति रमागमे अमावितौ 'आर्धधातुकस्येड्वलादेः' इतीटि प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इति निषेधे भारद्वाजनियमात् विकल्पेन इटि 'बिभर्जिथ' इति । इडभावे तु द्वित्वादिकार्ये 'बभ्रस्ज्थ' इति स्थिते 'भ्रस्जोरोपधयोः' इति रमि रोपधयोश्च निवृत्तौ 'बभर् ज् थ' इति स्थिते 'व्रश्चभ्रस्ज' इति जस्य षत्वे ष्टुत्वे **'बभर्ष्ठ'** इति । रमभावपक्षे—द्वित्वादिकार्ये कृते भारद्वाजनियमात् विकल्पेनेटि सस्य श्चुत्वेन शत्वे **'झलां जश् झशि'** इति शस्य जत्वे **'बभ्रज्जिथ'** इति । रमभावे इडभावे च पक्षे पूर्ववद् द्वित्वादिकार्ये 'बभ्रस्ज् थ' इति स्थिते 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'व्रश्चभ्रस्ज' इति जस्य षत्वे ष्टुत्वे 'बभ्रष्ठ' इति चतुर्थं सिद्धं रूपं भवति ।

**भृज्ज्यात्** ( ई० ५१ )—भ्रस्ज्धातोराशीर्लिङि तिपि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे यासुटि उटि गते 'किदाशिषि' इति यासुटः कित्वात् किङति 'भ्रस्जोरोपधयोः' इति रमागमं बाधित्वा पूर्वविप्रतिषेधेन पूर्वं कित्वात् 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे 'स्कोः संयोगाद्योरन्ते च' इति यासः सकारस्य लोपे 'भृस्ज् या त्' इति स्थिते धातोस्सकारस्य श्चुत्वेन शकारे 'झलांजश् झशि' इति शस्य जत्वे 'भृज्ज्यात्' इति सिद्धम् ।

**अभार्क्षीत्** ( ई० ५३ ) भ्रस्ज्धातोर्लुङि तिपि अडागमे च्लौ सिचि 'भ्रस्जोरोपधयोः—' इति रमागमे 'व्रश्चभ्रस्ज—' इति षत्वे 'षढोः कः सि' इति षस्य कत्वे सस्य षत्वे तिप इकारलोपे इटि 'वदव्रज—' इति वृद्धौ 'अभार्क्षीत्' इति । रमोऽभावे 'स्कोः—' इति सलोपे 'व्रश्च—' इति जस्य षत्वे षस्य कत्वे सिचः सस्य षत्वे 'वदव्रज—' इति वृद्धौ 'अभ्राक्षीत्' इति ।

**क्रष्टा** ( ई० ४० )—कृष्धातोर्लुटि तिपि 'स्यतासी ऌलुटोः, इति तासिप्रत्यये इकारलोपे 'लुटः प्रथमस्य डारौरसः' इति तिपो डादेशे डित्वसामर्थ्यादभस्यापि

टेर्लोपे 'कृष् त् आ' इति स्थिते 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति वैकल्पिकेन अमागमे 'कृ अ ष् त् आ' इति स्थिते 'इको यणचि' इति यणि ष्टुत्वे 'क्रष्टा' इति । अमोऽभावे 'पुगन्तलघूपधस्य च' इति गुणे ष्टुत्वे 'कर्ष्टा' इति भवति ।

**अक्राक्षीत्** ( ई० ४४ ) कृष्धातोर्लुङि प्रथमपुरुषैकवचने परस्मैपदे तिपि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'लुङ्लुङ्' इत्यडागमे अनुबन्धलोपे च्लौ 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः' इति वार्तिकेन च्लेः सिचि इचि गते 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति वैकल्पिकेन अमि यणि अनुबन्धलोपे 'अ क्र ष् स त्' इति स्थिते 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'षढोः कः सि' इति धातोः षस्य कत्वे 'आदेशप्रत्यययोः' इति सिचः सस्य षत्वे 'अस्तिसिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि अनुबन्धलोपे 'अक्राक्षीत्' इति । अमोऽभावे वृद्धौ रपरत्वे 'अकार्क्षीत्' इति । सिजभावपक्षे 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशे अटि षस्य कत्वे षत्वे कित्वाद्गुणाऽभावे 'अकृक्षत्' इति रूपत्रयं सिद्धं भवति ।

**अकृष्ट** (ई० २३ )—कृष्धातोर्लुङि अडागमे लुङस्तादेशे च्लौ 'स्पृशमृशकृष्' इति विभाषया च्लेः सिचि इचि गते 'लिङ्सिचावात्मनेपदेषु' इति कित्वादमगुणयोरभावे 'अकृष् स् त' इति स्थिते 'झलो झलि' इति सलोपे ष्टुत्वे 'अकृष्ट' इति । सिजभावे अटि 'शल इगुपधादनिटः क्स' इति च्लेः क्सादेशे अनुबन्धलोपे 'अ कृष् स त' इति स्थिते कित्वादमगुणयोरभावे 'षढोः कः सि' इति धातोः षकारस्य कत्वे सस्य षत्वे 'अकृक्षत' इति ।

**मुञ्चति** ( ई० ४७ )—मुच्धातोर्लटि तिपि 'तुदादिभ्यः शः' इति शप्रत्यये 'शे मुचादीनाम्' इति नुमि अनुस्वारपरसवर्णे 'मुञ्चति' इति ।

**अमुचत्** (ई० २६)—मुच् धातोर्लुङि प्रथमपुरुषैकवचने परस्मैपदे लुङस्तिपि अनुबन्धलोपे 'इतश्च' इति इकारलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इति च्लेरङि ङित्वाद् गुणाऽभावे 'अमुचत्' इति ।

**अलिपत्**—( ई० ५० )—लिप्धातोर्लुङि प्रथमपुरुषैकवचने परस्मैपदे लुङस्तिपि अनुबन्धलोपे 'इतश्च' इति इकारलोपे 'लुङ् लङ्' इत्यडागमे अनुबन्धलोपे च्लौ 'लिपिसिचिह्वश्च' इति च्लेरङि अनुबन्धलोपे ङित्वात् गुणाभावे 'अलिपत्' इति ।

**वव्रश्च** (ई० ४९ )—व्रश्च्धातोर्लिटि तिपि णलि द्वित्वे अभ्यासत्वे 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासरेफस्य सम्प्रसारणे 'उरत्' इति अत्वे हलादिशेषे 'वव्रश्च'

इति। नच 'व र् वश्च् अ' इति स्थिते अभ्यासवकारस्यापि पुनः सम्प्रसारणं कुतो नेति वाच्यम्, उरदत्वस्य 'अचः परस्मिन्—' इति स्थानिवत्वेन 'न सम्प्रसारणे' इति निषेधात्।

**अव्याचीत् (ई० २६)**—'व्यच् व्याजीकरणे' अस्माद्धातोर्लुङि तिपि अटि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे च्लौ च्लेः सिचि इचि गते 'आर्धधातुकस्येड्वलादेः' इति सस्य इटि 'अस्तिसिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि 'अतो हलादेर्लघोः' इति वृद्धौ 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अव्याचीत्' इति। वृद्ध्यभावे 'अव्यचीत्' इति च सिद्धं भवति।

**व्यचेः कुटादित्वमिति (ई० २४)**—ननु 'व्यचेः कुटादित्वमनसि' इति व्यच् धातोः कुटादित्वात् 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इत्यनेन तासादेर्ङिद्वद्भावे तस्मिन् परे व्यचो यकारस्य 'ग्रहिज्ये'त्यनेन सम्प्रसारणे लुटि 'विचिते'त्यादि कथन्नेति चेन्न, अनसीति पर्युदासेन असभिन्नाऽसदृशस्य कृत्त्वेनैव तत्र ग्रहणात्। तथाच असभिन्नकृत्प्रत्यये परे एव तत्प्रवृत्तिरिति भावः।

**आनर्च्छ (ई० ५१)**—ऋच्छ्धातोर्लिटस्तिपि णलि अनुबन्धलोपे लिटि धातो'रिति द्वित्वे 'ऋच्छ् ऋच्छ् अ' इति स्थिते अभ्याससंज्ञायाम् 'उरत्' इत्यभ्यास ऋवर्णस्य अत्वे रपरत्वे 'हलादिः शेषः' इत्यभ्यासरेफस्य छस्य च लोपे 'अ ऋच्छ् अ' इति जाते 'अत आदेः' इत्यभ्यासाऽकारस्य दीर्घे 'आ ऋच्छ् अ' इति स्थिते 'तस्मान्नुड्द्विहलः' इति द्विहल्ग्रहणस्याऽनेकहलुपलक्षणत्वान्नुटि अनुबन्धलोपे 'आ न् ऋच्छ् अ' इति दशायाम् 'ऋच्छत्यृताम्' इति गुणे रपरे 'आनर्च्छ' इति सिद्धम्।

**लोभिता**—लुभ्धातोर्लुटि तिपि तासि तस्याऽर्धधातुकत्वे 'तीषसहलुभरुषरिषः' इति विकल्पेन इटि अनुबन्धलोपे 'पुगन्तलघूपधस्य च' इति गुणे तिपो डादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'लोभिता' इति। इडभावे 'झषस्तथोर्धोऽधः' इति तस्य धत्वे 'झलां जश् झशि' इति भस्य बत्वे गुणे 'लोब्धा' इति सिद्धम्।

**तृम्फति**—'तृन्फ' धातुरुपदेशे 'तृम्फ्' इति। तस्माल्लटि तिपि 'तुदादिभ्यः शः' इति शपं प्रबाध्य शप्रत्यये शस्याऽपित्त्वेन 'सार्वधातुकमपित्' इति ङित्वे 'अनिदिताम्' इति नलोपे 'शे तृम्फादीनां नुम्वाच्यः' इति वार्तिकेन नुमि अनुबन्धलोपे अनुस्वारे परसवर्णे 'तृम्फति' इति।

**ममङ्क्थ** ( ई० ४४, ५२ )—मस्ज्धातोर्लिटि सिपि थलि अनुबन्धलोपे द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यभ्यासस्यान्त्यहलो लोपे 'म मस्ज् थ' इति भूते 'स्तो श्चुना श्चुः' इति सस्य श्चुत्वेन शत्वे 'झलां जश् झशि' इति शस्य जस्त्वेन जत्वे 'ऋतो भारद्वाजस्य' इति विभाषया इटि झलादित्वाऽभावान्नुमोऽभावे 'ममज्जिथ' इतिसिद्धम् । इडभावे तु मस्जिनशोर्झलि' इति सूत्रेण 'मस्जेरन्त्यात्पूर्वो नुम्वाच्यः' इति वार्तिकबलात् सकारात् परे नुमि अनुबन्धलोपे 'म मस् न् ज् थ' इति दशायां 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'म मन् ज् थ' इति भूते 'चोः कु' इति जस्य कुत्वेन गत्वे 'खरि च' इति गस्य कत्वे नस्यानुस्वारे परसवर्णे 'ममङ्क्थ' इति च सिद्धं भवति ।

**अम्राक्षीत्**—'मृश्धातोर्लुङि तिपि अटि अनुबन्धलोपे च्लौ 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः' इति वार्तिकेन विकल्पेन च्लेः सिचि इचि गते 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति विभाषया अमि मलोपे ऋकारस्य यणि 'इतश्च' इति तिप इकारलोपे 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति शस्य षत्वे 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'षढोः कः सि' इति षस्य कत्वे 'आदेशप्रत्यययोः' इति सिचः सस्य षत्वे 'अस्तिसिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि अनुबन्धलोपे 'अम्राक्षीत्' इति । अमोऽभावे उक्तसूत्रेण विभाषया च्लेः सिचि कृते 'अमृश् स् त्' इति स्थिते ईटि 'वदव्रजे'ति वृद्धौ रपरत्वे 'व्रश्चे'ति षत्वे कत्वे सिचः सस्य च षत्वे 'अमार्क्षीत्' इति । सिजभावे तु 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशे धातोः शस्य 'व्रश्चे'ति षत्वे कत्वे सिचः सस्य च षत्वे कित्वाद्वृद्ध्यभावे 'अमृक्षत्' इति च सिद्धं भवति ।

**चकरतुः** ( ई० ४५ )—कृधातोर्लिटस्तसि तसोऽतुसि द्वित्वे अभ्यासत्वे ह्रस्वे 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे 'कुहोश्चु' इति चुत्वे 'च कृ अतुस्' इति स्थिते 'ऋच्छत्यॄताम्' इति गुणे रपरे सकारस्य रुत्वे विसर्गे 'चकरतुः' इति सिद्धम् ।

**उपास्किरत्** ( ई० ४६, ४७, ४९ )—'उप' इत्युपसर्गात् कॄधातोर्लङस्तिपि शे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे तिप इकारलोपे 'ॠत इद्धातोः' इति इत्वे रपरत्वे 'उप अ किर् त्' इति दशायां 'सुट् कात्पूर्वः इति वक्तव्यम्' इति वार्तिकबलात् 'अभ्यासव्यवायेऽपि' इति अड्व्यवधाने सत्यपि ककारात्पूर्वं सुटि अनुबन्धलोपे सवर्णदीर्घे 'उपास्किरत्' इति सिद्धम् ।

गिलति ( ई० २७ )—गॄ धातोर्लटस्तिपि शप्रत्यये अनुबन्धलोपे 'ॠत इद्धातोः' इति इत्वे रपरत्वे 'अचि विभाषा' इति वैकल्पिके लत्वे 'गिलति' इति। लत्वाऽभावे 'गिरति' इति च सिद्धं भवति।

अप्राक्षीत्—( ई० २४ ) प्रच्छ्धातोर्लुङि लुङस्तिपि 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे च्लौ च्लेः सिचि इचि गते 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति छस्य षत्वे 'षढोः कः सि' इति षस्य कत्वे 'अस्तिसिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि 'वदव्रजे'ति वृद्धौ 'अप्राक्षीत्' इति सिद्धं भवति।

उद्विजिता ( ई० ४८, ५३ )—उत्पूर्वात् 'ओविजी भयचलनयोः' इत्यस्माद्धातोर्लुटि लुटस्तादेशे तासिप्रत्यये इडागमे अनुबन्धलोपे 'लुटः प्रथमस्य डारौरसः' इति डादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'विज इट्' इति ङित्वाद् गुणाऽभावे 'उद्विजिता' इति सिद्धम्।

इति तुदादिप्रकरणम्।



# अथ रुधादिप्रकरणम्

रुन्धः ( ई० ५२ )—रुध्धातोर्लटस्तसि शपमपवाद्य श्नमि अनुबन्धलोपे 'रु न ध् तस्' इति स्थिते 'श्नसोरल्लोपः' इति श्नमो नकारान्तर्गताकारस्य लोपे 'झषस्तथोर्धोऽधः' इति तसस्तकारस्य धत्वे 'झरो झरि सवर्णे' इति धातोर्धस्य लोपे सस्य रुत्वे विसर्गे 'रुन्धः' इति सिद्धम्।

अरुणः ( ई० ४२ )—रुध्धातोर्लङि सिपि अटि श्नमि णत्वे हल्ङ्यादिना सलोपे धस्य जश्त्वे 'दश्चे'ति दस्य रुत्वे रेफस्य विसर्गे 'अरुणः' इति। रुत्वाभावे चर्त्वे 'अरुणत्' इति।

हिनस्ति ( ई० ४८ )—'हिसि हिंसायाम्' इति धातोर्लटस्तिपि 'इदितो नुम्धातोः' इति धातोरिदित्वान्नुमि श्नमि अनुबन्धलोपे 'हि न न् स् ति' इति भूते 'श्नान्नलोपः' इति श्नमः परस्य नस्य लोपे 'हिनस्ति' इति जातम्।

तृणेढि ( ई० ४७ ) 'तृह् हिंसायाम्' इत्यस्माद्धातोर्लटस्तिपि शपमपवाद्य श्नमि अनुबन्धलोपे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति श्नमो नस्य णत्वे 'तृणह्ति' इति स्थिते

'तृणह इम्' इति इमि अनुबन्धलोपे 'तृण इ ह् ति' इति दशायाम् 'आद्गुणः' इति गुणे 'हो ढः' इति हस्य ढत्वे 'झषस्तथोर्धोऽधः' इति तिपस्तकारस्य धकारे धस्य ष्टुत्वेन ढकारे 'ढो ढे लोपः' इति पूर्वढकारस्य लोपे 'तृणेढि' इति जातम् ।

**अतृणेट्** ( ई० ५० ) तृहधातोर्लङि लङस्तिपि 'लुङ्लङ्' इत्यादि अनुबन्धलोपे तिप इकारलोपे 'अ तृह् त्' इति दशायां शपमपवाद्य श्नमि 'तृणह इम्' इति इमागमे अनुबन्धलोपे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति नस्य णत्वे 'आद्गुणः' इति गुणे 'अतृणेह्त्' इति जाते 'हो ढः' इति हस्य ढत्वे हल्ङ्यादिना तलोपे 'झलां जशोऽन्ते' इति ढस्य डत्वे 'वाऽवसाने' इति डस्य चर्त्वे 'अतृणेट्' इति ।

**औनत्** ( ई० २६ )—'उन्दी क्लेदने' अस्माद्धातोर्लङि तिपि शपमपवाद्य श्नमि अनुबन्धलोपे 'उनन् द् ति' इति जाते 'आडजादीनाम्' इत्यादि अनुबन्धलोपे 'आटश्च' इति वृद्धौ 'श्नान्नलोपः' इति धातोर्नस्य लोपे 'औनद् ति' इति स्थिते 'इतश्च' इति इकारलोपे 'हल्ङ्याब्भ्यः' इति तलोपे 'वाऽवसाने' इति दस्य चर्त्वे 'औनत्' इति । चर्त्वाऽभावे 'औनद्' इति भवति ।

**अनजानि**—अञ्ज्धातोर्लोटस्थाने मिपि श्नमि अनुबन्धलोपे 'श्नान्नलोपः' इति धातोरुपदेशनकारस्य लोपे 'मेर्निः' इति मेर्न्यादेशे 'आडुत्तमस्य पिच्च' इत्यादि अनुबन्धलोपे 'अनजानि' इति सिद्धम् ।

**आनक्** ( ई० २४ )—अञ्ज्धातोर्लङस्तिपि श्नमि 'इतश्च' इति तिप इकारलोपे 'श्नान्नलोपः' इति नलोपे 'आडजादीनाम्' इत्यादि 'आटश्च' इति वृद्धौ 'हल्ङ्याब्भ्यः' इति तलोपे 'चोः कुः' इति जस्य कुत्वेन गकारे 'वाऽवसाने' इति चर्त्वे 'आनक्' इति । चर्त्वाभावे 'आनग्' इति च भवति ।

**आञ्जीत्** ( ई० ४९, ५२ )—अञ्ज्धातोर्लुङस्तिपि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'आडजादीनाम्' इत्यादि वृद्धौ च्लौ च्लेः सिचि इचि गते 'अञ्जेः सिचि' इति सिचो नित्यमिटि 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि 'इट ईटि' इति सलोपे 'सवर्णदीर्घे' 'आञ्जीत्' इति सिद्धम् ।

**शिण्ड्ढि** ( ई० २४, २६ )—लृकारेत्संज्ञक शिष् धातोर्लोटः सिपि शपमपवाद्य श्नमि अनुबन्धलोपे 'सेर्ह्यपिच्च' इति सेर्ह्यादेशे 'शिनष् हि' इति जाते 'हुझल्भ्यो हेर्धिः' इति हेर्धित्वे 'श्नसोरल्लोपः' इत्यल्लोपे 'शिन्ष् धि' इति दशायां 'झलां जश् झशि' इति षस्य जस्त्वेन डकारे 'ष्टुना ष्टुः' इति धस्य ढत्वे 'शिन्ड् ढि' इति

स्थिते 'झरो झरि सवर्णे' इति लोपे नस्यानुस्वारे परसवर्णे च कृते 'शिण्ढि' इति। डलोपाभावे तु 'शिण्ड्ढि' इति बोध्यम्।

**ओदनं भुङ्क्ते** ( ई० ४१, ४४ )—'भुजोऽनवने' भुजः, अनवने, इति पदच्छेदः। अवनं = रक्षणं, तद्भिन्ने अर्थे भुज्धातोरात्मनेपदं स्यादित्यर्थः। तेन भोजनेऽर्थे भुज्धातोरात्मनेपदे सति 'ओदनं भुङ्क्ते' इति भवति। रक्षणे तु 'महीं भुनक्ति ( रक्षति )' इति परस्मैपदं भवति।

इति रुधादिप्रकरणम्।

# अथ तनादिप्रकरणम्

**अतत** ( ई० ४२, ४७, ५३ )—'तनु विस्तारे' अस्माद्धातोर्लुङि लुङःस्थाने आत्मनेपदे तादेशे अडागमे अनुबन्धलोपे च्लौ च्लेः सिचि 'तनादिभ्यस्तथासोः' इति विभाषया सिचो लुकि 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इत्यनुनासिकनकारस्य लोपे 'अतत' इति। सिज्लोपाभावे सिचः सकारस्य इटि षत्वे 'अतनिष्ट' इति च रूपं भवति।

**असात** ( ई० ४४, ४८ )—उकारेत्संज्ञक 'षणु दाने' इत्यस्माद्धातोर्लुङि 'धात्वादेः षः सः' इति सत्वे निमित्ताऽपाये नैमित्तिकस्याप्यपायः' इति परिभाषया षस्य सत्वे सति णत्वस्यापि निवृत्तौ 'सन् लुङ्' इति जाते आत्मनेपदे लुङस्तादेशे अटि अनुबन्धलोपे च्लौ च्लेः सिचि 'तनादिभ्यस्तथासोः' इति विभाषया सिचो लोपे 'अ सन् त' इति जाते 'जनसनखनां सञ्झलोः' इत्यनेन 'अलोऽन्त्यस्येति सहकारेण नस्यात्वे सवर्णदीर्घे 'असात' इति जातम्।

**अक्षत** ( ई० ५० )—उकारेत्संज्ञक 'क्षणु' धातोर्लुङस्तादेशे अडागमे अनुबन्धलोपे च्लौ च्लेः सिचि 'तनादिभ्यस्तथासोः' इति पाक्षिके सिचो लोपे 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इत्यनुनासिकस्य णस्य लोपे 'अक्षत' इति। लुगभावपक्षे सिचः सस्य इटि षत्वे ष्टुत्वे 'अक्षणिष्ट' इति भवति।

**कुर्वन्ति** ( ई० ४७, ५२ )—'डु कृञ् करणे' इत्यस्माद्धातोर्लटि तत्स्थाने झौ झस्य अन्तादेशे शपं प्रबाध्य 'तनादिकृञ्भ्यः उः' इत्युप्रत्यये 'कृ उ अन्ति' इति जाते 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे 'कर् उ अन्ति' इति भूते 'अत

उत्सार्वधातुके' इति कृञोऽकारस्य उत्वे 'इको यणचि' इत्युप्रत्ययसम्बन्धिनः उकारस्य यणि 'हलि च' इति रेफान्तस्योपधायाः दीर्घत्वे प्राप्ते 'न भकुर्छुराम्' इति निषेधे 'कुर्वन्ति' इति जातम् ।

**कुर्यात्** ( ई० ४९ )—कृधातोर्विधिलिङि लिङो तत्स्थाने तिपि अनुबन्धलोपे तिप इकारलोपे च कृते सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य 'तनादिकृञ्भ्य उः' इत्युप्रत्यये तस्यार्धधातुकत्वात्तस्मिन् परे कृञो ऋकारस्य गुणे रपरत्वे 'क र् उ त्' इति स्थिते 'अत उत्सार्वधातुके' इति ककारघटकाऽकारस्य उत्वे यासुटि उटि गते 'लिङः सलोपोऽनन्त्यस्य' इति सलोपे 'कु र् उ यात्' इति जाते 'ये च' इत्यनेन उकारस्य लोपे 'कुर्यात्' इति सिद्धम् ।

**अकार्षीत्** ( ई० २३ )—कृधातोर्लुङस्तिपि अडागमे तिप इकारलोपे च्लौ च्लेः सिचि सस्यार्धधातुकत्वादिटि प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इति निषेधे 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ 'आदेश-प्रत्यययोः' इति षत्वे 'अकार्षीत्' इति ।

**संस्करोति**—( ई० ४६ ) सम्पूर्वकात् कृधातोर्लटि तिपि उप्रत्यये उप्रत्यय-माश्रित्य ऋकारस्य गुणे रपरे तिप्रत्ययमाश्रित्य उकारस्य गुणे 'सम्परिभ्यां करोतौ भूषणे' इति सुटि मस्यानुस्वारे 'संस्करोति' इति । अलंकरोतीत्यर्थः ।

**उपस्कृतं ब्रूते** ( ई० ४४ ) अत्र 'उपात्प्रतियत्ने' इति सूत्रेण वाक्याध्याहारार्थे सुट् । वाक्याध्याहारेण ब्रुते इत्यर्थः । 'एधोदकस्योपस्कुरुते' इत्यत्र तु प्रतियत्नेऽर्थे सुड् भवति । प्रतियत्नः = गुणाधानमिति मूले स्पष्टम् ।

इति तनादिप्रकरणम् ।

# अथ क्र्यादिप्रकरणम्

**प्रमीणीते** ( ई० २४ )—प्रोपसर्गात् मीञ् धातोर्लटि तत्स्थाने आत्मनेपदे तप्रत्यये टेरेत्वे शपं प्रबाध्य 'क्र्यादिभ्यः श्ना' इति श्नाप्रत्यये अनुबन्धलोपे 'हिनु-मीना' इत्यनेन णत्वे 'ई हल्यघोः' इति ईत्वे 'प्रमीणीते' इति जातम् ।

**स्तभान** (ई० ४२, ४५, ४७, ४६, ५२)—उकारेत्संज्ञक-रोधनार्थक-'स्तम्भ' धातुः सौत्रः । तस्माल्लोटि तत्स्थाने सिपि सिपः सार्वधातुकत्वात् शपि प्राप्ते तमप-वाद्य 'स्तन्भुस्तुन्भु—'इत्यादि सूत्रेण चकरात् श्नाप्रत्यये अनुबन्धलोपे सेर्ह्यादेशे

'स्तन्भ ना हि' इति स्थिते 'हलः श्नः शानज्झौ' इति नाशब्दस्य शानजादेशे अनुबन्धलोपे शित्वात्सार्वधातुकत्वेन 'सार्वधातुकमपित्' इति ङित्वे सति 'अनिदिताम्—' इति धातोर्नस्य लोपे 'अतो हेः' इति हेर्लुकि 'स्तभान' इति जातम्।

**व्यष्टभत्** ( ई० ४१, ५१, ५३ )—विपूर्वकात् 'स्तन्भ' धातोर्लुङि तिपि अडागमे अनुबन्धलोपे तिप इकारलोपे च्लौ च्लेः सिचि प्राप्ते तम्प्रबाध्य 'जॄस्तन्भुम्रुचु—' इत्यादिना अङि अनुबन्धलोपे 'वि अ स्तन्भ् अ त्' इति जाते यणि अनिदिताम्–' इति नलोपे 'स्तन्भेः' इति सस्य षत्वे ष्टुत्वे 'व्यष्टभत्' इति। अङोऽभावे च्लेः सिचि इचि गते 'वि अस्तन्भ् स् त्' इति स्थिते यणि सस्य इटि 'अस्तिसिचोऽपृक्ते' इति तस्य च ईटि अनुबन्धलोपे 'इट ईटि' इति सलोपे सवर्णदीर्घे 'स्तन्भेः' इति सस्य षत्वे ष्टुत्वे नस्यानुस्वारे परसवर्णे 'व्यष्टम्भीत्' इति च भवति। मूले तु अङभावे 'अस्तम्भीत्' इत्युक्तम्। अत्र 'स्तन्भेः' इति षत्वन्तु न उपसर्गादिणः परस्यैव स्तन्भेः सस्य षः स्यादित्यर्थात्।

**स्तरिषीष्ट**—स्तॄधातोराशीर्लिङि तङि सीयुटि यलोपे 'सुट् तिथोः' इति सुटि 'लिङ्सिचावात्मनेपदेषु' इति विभाषया इटि सार्वधातुकार्धधातुकयोः इति गुणे रपरत्वे 'स्तरि सी स् त' इति जाते 'वॄतो वा' इति इटो दीर्घे प्राप्ते 'न लिङि' इति निषेधे उभयोः सकारयोः षत्वे ष्टुत्वे 'स्तरिषीष्ट' इति। इडभावे तु 'उश्च' इति कित्वाद् गुणाभावे 'ॠत इद्धातोः' इति इत्वे रपरत्वे 'हलि च' इति दीर्घे 'स्तीर्षीष्ट' इति।

**ग्रहीता** ( ई० ४४, ४६, ४७, ५२ )—ग्रह्धातोर्लुटि तिपि तासिप्रत्यये तिपो डादेशे अनुबन्धलोपे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्धलोपे 'ग्रहोऽलिटि दीर्घः' इति इटो दीर्घे 'ग्रहीता' इति।

**गृहाण** ( ई० ४५, ५० )—ग्रह्धातोर्लोटि मध्यमपुरुषैकवचने सिपि अनुबन्धलोपे 'सेर्ह्यपिच्च' इति सेर्ह्यादेशे शपमपवाद्य 'क्र्यादिभ्यः श्ना' इति श्नाप्रत्यये अनुबन्धलोपे शित्वात्सार्वधातुकत्वे 'सार्वधातुकमपित्' इति ङित्वे 'ग्रहिज्ये'ति सम्प्रसारणे पूर्वरूपे 'हलः श्नः शानज्झौ' इति श्नः शानजादेशे शस्येत्संज्ञायां लोपे च विहिते नस्य णत्वे 'अतो हेः' इति हेर्लुकि 'गृहाण' इति जातम्।

**अग्रहीत्**—ग्रह्धातोर्लुङि तिपि अडागमे तिप इकारलोपे च्लौ च्लेः सिचि 'आर्धधातुकस्येड्वलादेः' इति सस्य इटि 'अस्तिसिचोऽपृक्ते' इति तस्य च ईटि

'इट ईटि' इति सलोपे सवर्णदीर्घे 'वदव्रजे'ति प्राप्तदीर्घस्य 'नेटि' इत्यनेन, 'अतो हलादेर्लघोः' इति प्राप्तवृद्धेः 'ह्म्यन्ते'त्यनेन च निषेधे 'अग्रहीत्' इति जातम् ।

**अशान** ( ई० ४८ )—'अश् भोजने' इत्यस्माद्धातोर्लोटः स्थाने सिपि सेर्ह्यादेशे शपमपवाद्य 'क्र्यादिभ्यः श्ना' इति श्नाप्रत्यये 'हलः श्नः शानज्झौ' इति श्नः शानजादेशे अनुबन्धलोपे 'अश् आन हि' इति दशायाम् 'अतो हेः' इति हेर्लुकि 'अशान' इति सिद्धम् ।

**शश्रतुः** ( ई० ४९ ) श्रृधातोर्लिटि तसि तसोऽतुसि द्वित्वादिकार्ये 'शृदप्रां ह्रस्वो वा' इति ह्रस्वे यणि 'शश्रतुः' इति । ह्रस्वाभावे 'ऋच्छत्यृताम्' इति गुणे रपरत्वे 'शशरतुः' इति ।

**अभान्त्सीत्** ( ई० ५१ ) बन्धधातोर्लुङि तिपि अडागमे च्लौ सिचि 'वदव्रज–' इति वृद्धौ 'एकाचः–' इति बस्य भषभावे तिप इकारलोपे तस्य ईटि धस्य चर्त्वे 'अभान्त्सीत्' इति ।

इति क्र्यादिप्रकरणम् ।



# अथ चुरादिप्रकरणम्

**अचूचुरत्, अचूचुरत** ( ई० ४४, ४६, ४८ )—'चुर स्तेये' इत्यस्माद्धातोः 'सत्यापपाशरूपवीणा—' इत्यादिसूत्रेण चुरादित्वात् स्वार्थे णिचि णचयोरित्संज्ञायां लोपे च कृते 'चुर् इ' इति स्थिते णिच इकारस्य 'आर्धधातुकं शेषः' इत्यार्धधातुकत्वे 'पुगन्तलघूपधस्य च' इति गुणे 'चोरि' इति जाते 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां धातुत्वाल्लुङि लः स्थाने परस्मैपदे तिपि 'लुङ्लङ्–' इत्यडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि अनुबन्धलोपे 'णेरनिटि' इति णिलोपे 'अ चोर् अ त्' इति जाते 'णौ चङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वे 'चङि' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्यासत्वे 'हलादिः शेषः' इत्यभ्यासरेफस्य लोपे 'अ चु चुर् अ त्' इति दशायां 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'दीर्घो लघोः' इति अभ्यासस्य दीर्घे 'अचूचुरत्' इति । आत्मनेपदे 'अचूचुरत' इत्यपि पूर्ववदेव सिद्धं भवति ।

**अपीपिडत्** ( ई० ४५, ५०, ५२ )—'पीड अवगाहे' इत्यस्माद्धातोः 'सत्यापपाश—'इति णिचि अनुबन्धलोपे 'सनाद्यन्ता धातवः' इति णिजन्तस्य

धातुसंज्ञायां धातुत्वाल्लुङि तिपि अडागमे अनुबन्धलोपे तिप इकारलोपे च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति चङि 'चङि' इति द्वित्वे अभ्यासत्वे हलादिशेषे अभ्याससम्बन्धिनः ईकारस्य ह्रस्वे 'अपिपीड् इ त्' इतिस्थिते 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्' इति उपधायाः ह्रस्वे कृते लघुपरकत्वात् 'सन्वल्लघुनि–' इति सन्वद्भावे 'दीर्घो लघोः' इत्यनेन अभ्यासस्य दीर्घे 'णेरनिटि' इति णिलोपे 'अपीपिडत्' इति। ह्रस्वाभावपक्षे ह्रस्वपरकत्वाऽभावेन सन्वद्भावाभावात् दीर्घाप्राप्त्या 'अपिपीडत्' इति भवति।

**अपप्रथत्** ( ई० ४०, ५१ )—प्रथधातोः 'सत्यापपाश–' इति णिचि णिजन्तस्य धातुत्वाल्लुङि तिपि अडागमे तिप इकारलोपे च्लौ 'णिश्रि–' इति च्लेश्चङि 'चङि' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'सन्वल्लघुनि–' इति सन्वद्भावे 'सन्यतः' इति इत्वे प्राप्ते तम्प्रबाध्य 'अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्' इत्यभ्यासाकारस्य अत्वे 'णेरनिटि' इति णिलोपे 'अपप्रथत्' इति।

**अपीपृथत्**—पृथ्धातोः स्वार्थे णिचि धातुत्वाल्लुङि तिपि अडागमे च्लौ 'णिश्रि–' इति च्लेश्चङि 'णेरनिटि' इति णिलोपे प्रत्ययलक्षणेन णित्वमाश्रित्य 'पुगन्ते'ति प्राप्तं गुणं बाधित्वा 'उर्ऋत्' इत्यनेन ऋकारस्य ऋकारे 'चङि' इति द्वित्वे अभ्यासत्वे उरदत्वे हलादिशेषे सन्वत्वादित्वे 'दीर्घो लघोः' इति दीर्घे 'अपीपृथत्' इति। ऋत्वाभावपक्षे 'द्विर्वचनेचि' इति निषेधात् गुणात् प्राग् द्वित्वे उरदत्वे हलादिशेषे प्रत्ययलक्षणेन णित्वमाश्रित्य ऋकारस्य गुणे रपरत्वे 'अपपर्थत्' इति। अत्र लघुपरकत्वाभावेन सन्वत्वविरहात् इत्वदीर्घौ न।

**कीर्तयति** ( ई० ५३ )—कॄत्धातोः स्वार्थे णिचि 'सनाद्यन्ताः–' इति धातुत्वाल्लटि तिपि शपि 'उपधायाश्च' इति धातोरुपधायाः ॠतः इत्वे रपरत्वे 'उपधायां च' इति दीर्घे 'सार्वधातुकार्धधातुकयोः' इति गुणे अयादेशे 'कीर्तयति' इति।

**अचीकृतत्–अचिकीर्तत्** ( ई० ४५, ५१, ५३ )—कॄत्धातोः स्वार्थे णिचि धातुत्वाल्लुङि तिपि च्लौ च्लेश्चङि 'उपधायाश्च' इति प्राप्तमित्वमपवाद्य 'उर्ऋत्' ऋवर्णस्य ऋत्वे 'चङि' इति द्वित्वे अभ्यासत्वे उरदत्वे हलादिशेषे चुत्वे सन्वत्त्वादित्वे 'दीर्घो लघोः' इति दीर्घे 'लुङ्लङ्–इत्यडागमे तिप इकारलोपे 'णेरनिटि' इति णिलोपे 'अचीकृतत्' इति। 'उर्ऋत्' इति विकल्पपक्षे 'उपधायाश्च' इति इत्वे रपरत्वे 'उपधायां च' इति दीर्घे 'कीर्त् इ अ ति' इति स्थिते द्वित्वे अभ्यासत्वे हलादिशेषे ह्रस्वे चुत्वे अटि णिलोपे तिप इकारलोपे 'अचिकीर्तत्' इति।

अलुलोकत् ( ई० ४४, ४१ )-ऋकारेत्संज्ञक-भाषार्थक 'लोकृ' धातोः स्वार्थे णिचि धातुत्वाल्लुङि तिपि अडागमे च्लौ 'णिश्रि-' इति च्लेश्चङि द्वित्वे अभ्यासत्वे हलादिशेषे अभ्यासह्रस्वे 'णौ चङ्युपधाया ह्रस्वः' इति उपधाह्रस्वे प्राप्ते 'नाग्लोपिशास्वृदिताम्' इति निषेधे लघुपरकत्वाभावेन सन्वत्त्वविरहात् 'दीर्घो लघोः' इति दीर्घाप्राप्तौ 'णेरनिटि' इति णिलोपे तिप इकारलोपे 'अलुलोकत्' इति।

धूनयति ( ई० ५२ )—धूञ्धातोः स्वार्थे णिचि धातुत्वाल्लटि तिपि शपि 'धूञ्प्रीञोर्नुक्' इति वार्तिकेन नुकि गुणे अयादेशे 'धूनयति' इति सिद्धम्।

कथयति ( ई० ४७ )—अजन्तात् 'कथ' धातोः 'सत्यापपाशे'ति सूत्रेण स्वार्थे णिचि तस्यार्धधातुकत्वात्तस्मिन्परे 'अतो लोपः' इति अल्लोपे 'अत उपधायाः' इति वृद्धौ प्राप्तायाम् 'अचः परस्मिन्' इत्यल्लोपस्य स्थानिवद्भावात्तदभावे धातुत्वाल्लटि तिपि शपि 'सार्वधातुकार्धधातुकयोः' इति गुणे अयादेशे तत्सिद्धिः।

अचकथत् ( ई० ४५, ४८ )—अजन्तात् 'कथ' धातोः 'सत्यापपाशे'ति स्वार्थे णिचि तस्यार्धधातुकत्वात् तस्मिन् परे 'अतो लोपः' इत्यल्लोपे तस्य स्थानिवद्भावात् उपधावृद्ध्यभावे धातुत्वाल्लुङस्तिपि अडागमे अनुबन्धलोपे 'इतश्चे'ति तिप इकारलोपे च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति चङि अनुबन्धलोपे 'णेरनिटि' इति णिच इकारलोपे चङि इति द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इति अभ्यासहलो लोपे चुत्वे अग्लोपित्वात्सन्वद्भावाऽभावेन दीर्घाऽभावे तत्सिद्धिः।

अजीगणत् ( ई० ४०, ४१, ४२, ४५, ४७ )—अजन्तात् 'गण' धातोः 'सत्यापपाशे'ति सूत्रेण स्वार्थे णिचि णिचः आर्धधातुकत्वेन 'अतो लोपः' इत्यल्लोपे तस्य स्थानिवत्त्वात् वृद्ध्यभावे धातुत्वाल्लुङस्तिपि अनुबन्धलोपे 'इतश्चे'ति तिप इकारलोपे च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि 'णेरनिटि' इति णिच इकारलोपे द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यभ्याससम्बन्धिणकारस्य लोपे 'कुहोश्चुः' इति अभ्यासगकारस्य जकारे 'अज गण् अ त्' इति स्थिते अग्लोपित्वाद् दीर्घसन्वद्भावयोरभावे 'ई च गणः' इति ईत्वे 'अजीगणत्' इति। पक्षे 'अजगणत्' इति।

औननत् ( ई० ४४, ४६, ४९ )—'ऊन परिहाणे' इत्यस्मादजन्ताद्धातोः स्वार्थे णिचि धातुत्वाल्लुङि तिपि अडागमे 'अचोऽञ्णित्' इति वृद्धौ च्लिप्रत्यये 'णिश्रि-' इति च्लेश्चङि 'चङि' इति अजादेर्द्वितीयस्य इति नशब्दस्य द्वित्वे अभ्यासत्वे 'अतो लोपः' इत्यल्लोपे अग्लोपित्वेन सन्वद्भावाऽभावाद् अभ्यासस्य इत्वदीर्घयोरभावे 'णेरनिटि' इति णिलोपे तिप इकारलोपे 'औननत्' इति।

नचात्र द्वित्वात् प्रागेव परत्वाद् अल्लोपे ततो निशब्दस्य द्वित्वे कृतेऽभ्यासे अकारश्रवणं न स्यादिति वाच्यम्, 'णिच्य च आदेशो न स्याद् द्वित्वे कर्तव्ये' इत्यर्थक 'द्विर्वचनेऽचि' इति सूत्रेण तन्निषेधात्। ननूक्तार्थे किम्मानमिति चेच्छृणु— 'पिपावयिषति, बिभावयिषति' इत्यादौ उक्तार्थाऽनङ्गीकारे द्वित्वं प्रति णिचोऽनिमित्तत्वाद् 'द्विर्वचनेऽचि' इति निषेधस्याऽप्रवृत्तौ द्वित्वात् प्रागेव परत्वाद् वृद्ध्यावादेशयोः कृतयोः अभ्यासे आकारस्य ह्रस्वे सति 'सन्यतः' इत्यनेनैव इत्व सिद्धे 'ओपुयण्ज्यपरे' इति सूत्रे पवर्गयण्प्रत्याहारजकारग्रहणस्यैव मानत्वात्। नचोक्तनियमस्वीकारे कृत्धातोर्णिचि लुङि द्विवे कर्तव्ये णावच आदेशस्य निषिद्धतया 'उपधायाश्च' इतीत्वात् प्रागेव द्वित्वादिकार्ये उत्तरखण्डे ऋत इत्वे रपरत्वे उपधादीर्घे 'अचिकीर्तत्' इत्यस्य स्थाने 'अचकीर्तत्' इत्यनिष्टरूपमापद्येतेति वाच्यम्, यत्र धातौ चङि द्विर्वचने कृते अभ्यासोत्तरखण्डस्य आद्योऽच प्रक्रियायां परिनिष्ठिते वा अवर्णो लभ्यते तत्रैव द्वित्वे कार्ये णावच आदेशो नेत्ययं निषेधविज्ञानात्। नचात्रैव किं बीजमिति वाच्यम्, पुयण्जीत्यभ्यासोत्तरखण्डेऽवर्णपरा भवन्तीति ज्ञापकस्य सजातीयापेक्षत्वेन तथा स्वीकारे क्षत्यभावात्।

इति चुरादिप्रकरणम्।



# अथ ण्यन्तप्रकरणम्

**ओः पुयण्ज्यपरे**—'उ' इत्यस्य 'ओः' इति षष्ठी 'पुयण्जि' इति छेदः। पुश्च यण् च ज् चेति समाहारद्वन्द्वात् सप्तमी। अः परो यस्मादिति बहुव्रीहिः। 'सन्यतः' इत्यस्मात् सनीत्यनुवर्तते। अङ्गस्येत्यधिकृतम्। 'अत्र लोपः' इत्यस्मादभ्यासस्येति, 'भृञामित्' इत्यस्मादिदिति चानुवर्तते। ततश्च 'सनि परे यदङ्गं तदवयवाभ्यासोकारस्येत्वं स्यात् पवर्गयण्जकारेष्ववर्णपरेषु परतः' इत्यर्थो भवति। उदाहरणं तु 'अबीभवत्' इति। अत्र 'अ बु भव् अ त्' इति स्थिते 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इत्यनेन 'चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सनीव कार्यं स्याण्णावग्लोपे असति इत्यर्थपक्षे सन्वद्भावे विहिते 'पिपठिषति' इत्यत्र यथा 'सन्यतः' इत्यनेन सनि परे अङ्गावयवाऽभ्यासाऽकारस्य इत्वं भवति तथैवाऽत्रापि चङ्परे सत्यप्यनेन सन्परकबुद्ध्या अवर्णपरकपवर्गे ( भकारे ) परे अङ्गावयवाभ्यासोकारस्य इत्वं सिद्धम्।

**अबीभवत्** ( ई० ४७, ४९, ५२ )—भूधातोः 'हेतुमति च' इति हेत्वर्थे णिचि 'णिच्यच आदेशो न द्वित्वे कर्तव्ये' इति निषेधात् पूर्वं वृद्ध्यभावे धातुत्वाल्लुङ्स्तिपि अनुबन्धलोपे तिप इकार लोपे च कृते 'लुङ्लङ्' इत्यटि च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि अनुबन्धलोपे 'णेरनिटि' इति णिलोपे 'चङि' इति द्वित्वे अभ्यासत्वे ह्रस्वे 'अभ्यासे चर्च' इति जश्त्वे 'अ बु भू अ त्' इति दशायां प्रत्ययलक्षणेन वृद्धौ आवादेशे 'णौ चङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'ओः पुयण्ज्यपरे' इत्यभ्यासोकारस्य इत्वे 'दीर्घो लघोः' इति दीर्घे उक्तं रूपं सिद्धम् ।

**अचूचुरत्** (ई० २५)–चुर्धातोः स्वार्थे णिचि उपधागुणे 'चोरि' इति, तस्मात् 'हेतुमति च' इति हेतुमण्णौ 'चोरि इ' इति स्थिते 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन' इति परत्वात् प्राप्तायामपि वृद्धिं बाधित्वा णिलोपे ण्यन्तस्य 'सनाद्यन्ताः–' इति धातुत्वाल्लुङि तिपि अडागमे तिप इकारलोपे च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि 'णौ चङ्युपधाया ह्रस्वः' इति उपधाह्रस्वे 'णेरनिटि' इति णिलोपे 'चङि' इति 'चुर्' इत्यस्य द्वित्वे 'सन्वल्लघुनि–' इति सन्वद्भावविषयत्वाद् 'दीर्घो लघोः' इति दीर्घे 'अचूचुरत्' इति ।

नन्वत्र उपधाह्रस्वः अभ्यासदीर्घश्चेति द्वयमपि चङ्परे णौ विहितम् । तदुभयमप्यत्र प्रत्ययलक्षणमाश्रित्य प्रथमणिचमादाय न सम्भवति, तस्य द्वितीयणिचा व्यवहितत्वेन चङ्परकत्वाभावात् । नापि द्वितीयणिचमादाय तदुभयोः सम्भवः, द्वितीयणिच्प्रकृतेः प्रथमण्यन्तस्य णिलोपमादाय अग्लोपित्वादिति चेन्न, 'चङ्परे णौ' इत्यत्र णावित्यस्य चङ्परकणित्वजात्याश्रयैकाऽनेकणिज्व्यक्तिपरकत्वेन विवक्षितत्वात् । तथा च णिद्वयस्य चङ्परकत्वाभावे णित्वस्य चङ्परकत्वमस्तीति ह्रस्वदीर्घयोरस्ति प्रवृत्तिरिति ।

**अशूशवत्** (ई० ४८)—श्विधातोः हेतुमण्णौ ण्यन्तस्य 'सनाद्यन्ताः—' इति धातुत्वाल्लुङि तिपि अडागमे तिप इकारलोपे च्लौ 'णिश्रि–' इति च्लेश्चङि 'अश्वि इ अ त्' इति स्थिते 'सम्प्रसारणं तदाश्रयं च कार्यं बलवत्' इति भाष्यात् वृद्ध्यायादेशौ प्रबाध्य 'णौ च संश्चङोः' इत्यनेन वस्य सम्प्रसारणे पूर्वरूपे 'शु' इत्यस्य 'चङि' इत्यनेन द्वित्वे उत्तरखण्डस्य णिचमाश्रित्य वृद्ध्यावादेशयोः उपधाह्रस्वे सन्वत्त्वविषयत्वाद् 'दीर्घो लघोः' इत्यभ्यासदीर्घे 'अशूशवत्' इति । सम्प्रसारणाऽभावे 'अशिश्वयत्' इति । अत्र अलघुत्वात् सन्वद्भावाभावेन दीर्घो न ।

**घातयति** ( ई० ४६, ४९ )—हन्धातोः हेतुमरणौ 'अदुपधायाः' इति वृद्धौ 'हनस्तोऽचिण्णलोः' इति हन्तेस्तकारान्तादेशे ण्यन्तस्य धातुत्वाल्लटि तिपि शपि 'हो हन्तेः' इति हस्य कुत्वे गुणेऽयादेशे 'घातयति' इति ।

**स्थापयति** ( ई० ५३ )—स्थाधातोः हेतुमण्णौ 'अर्तिह्रीव्लीरीक्नूयीक्ष्मा-य्यातां पुङ् णौ' इति पुकि ण्यन्तस्य धातुत्वाल्लटि तिपि शपि गुणे अयादेशे 'स्थापयति' इति ।

**अतिष्ठिपत्** ( ई० ४०, ४७ )—'ष्ठा गतिनिवृत्तौ' इति धातुः, अत्र 'धात्वा-देः षः सः' इति षस्य सत्वे ष्टुत्वनिवृत्तौ 'स्था' इति तस्मात् 'हेतुमति च' इति णिचि अर्तिह्रीव्लीरीक्नूयीक्ष्मायातां पुङ् णौ' इति पुकि उकि गते धातुत्वाल्लुङ-स्तिपि अटि अनुबन्धलोपे तिप इकारलोपे च कृते च्लौ 'णिश्रिद्रुस्रुभ्यः' इति च्लेश्चङि 'णिच्यच् आदेशो न द्वित्वे कर्तव्ये' इति निषेधात् इत्वाऽपेक्षया पूर्वं द्वित्वे अभ्यासत्वे 'शर्पूर्वाः खयः' इति सलोपे अभ्यासह्रस्वे 'अभ्यासे चर्च' इति चर्त्वे 'अ त स्थाप् इ अ त्' इति स्थिते 'णौ चङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वे 'णेरनिटि' इति णिलोपे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'सन्यतः' इति इत्वे षत्वे ष्टुत्वे 'तिष्ठते रित्' इतीत्वे 'अतिष्ठिपत्' इति सिद्धम् ।

ननु 'ओणृ अपनयने' इत्यत्र ऋदित्करणाल्लिङ्गात् 'उपधाकार्यं द्वित्वात् प्रबलम्' इति कल्पनया पूर्वं 'तिष्ठतेरित्' इतीत्वं ततो द्वित्वमिति चेन्न, उक्तकल्पनायाः उपधाकार्यमात्रविषयकत्वात् । 'ओः पयणोरि'ति वक्तव्ये पुयणज्ञोति वचनाल्लिङ्गात् 'णिच्यच आदेशो न' इति कल्पनायास्तु यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याऽद्योऽच् प्रक्रियायां परिनिष्ठिते रूपे वा अवर्णो लभ्यते तन्मात्रविषयकत्वमिति विशेषेणानेन सामान्यस्य तस्य बाधात् ।

**शाययति** ( ई० ५१ )—'शो तनूकरणे' इत्यस्माद्धातोः 'आदेच उपदेशेऽ-शिति' इत्यात्वे हेतुमण्णौ 'शाच्छासाह्वाव्यावेपां युक्' इति युकि 'सनाद्यन्ताः-' इति धातुत्वाल्लटि तिपि शपि गुणे अयादेशे 'शाययति' इति ।

**अपीप्यत्** ( ई० ४२ )—पाधातोः हेतुमण्णौ 'शाच्छासाह्वाव्यावेपां युक्' इति युकि 'पायि' इति, तस्मात् 'सनाद्यन्ताः-' इति धातुत्वाल्लुङि तिपि अडागमे तिप इकारलोपे च्लौ 'णिश्रि-' इति च्लेश्चङि द्वित्वेऽभ्यासत्वे हलादिशेषे 'लोपः पिबतेरीच्चाभ्यासस्य' इति उपधालोपे अभ्यासस्य ईत्वे च कृते णिलोपे 'अपीप्यत्' इति ।

पालयति ( ई० ५३ )—'पा रक्षणे' इत्यस्माद्धातोः हेतुमण्णौ 'पातेर्णौ लुग्वक्तव्यः' इति लुकि धातुत्वाल्लटि तिपि शपि गुणेऽयादेशे 'पालयति' इति ।

वाजयति ( ई० ५० )—'ओ वै शोषणे' इति धातोः हेतुमण्णौ 'आदेच उपदेशे–' इत्यात्वे 'वो विधूनने जुक्' इति जुकि ण्यन्तस्य धातुत्वाल्लटि तिपि शपि गुणेऽयादेशे 'वाजयति' इति ।

रोपयति ( ई० ४८ )—रुह् धातोः हेतुमण्णौ 'रुहः पोऽन्यतरस्याम्' इति धातोः हस्य पकारादेशे लघुपधगुणे 'सनाद्यन्ताः–' इति धातुत्वाल्लटि तिपि शपि गुणेऽयादेशे 'रोपयति' इति ।

दूषयति ( ई० ४१, ५२ )—दुष् धातोः हेतुमण्णौ 'दोषो णौ' इति ऊत्वे 'सनाद्यन्ताः–' इति धातुत्वाल्लटि तिपि शपि गुणेऽयादेशे 'दूषयति' इति ।

अररम्भत् ( ई० ४४ )—रभ् धातोः, हेतुमण्णौ 'रभेरशब्लिटोः' इति नुमि ण्यन्तस्य धातुत्वाल्लुङि तिपि अडागमे च्लौ 'णिश्रि–' इति च्लेश्चङि द्वित्वे अभ्यासत्वे हलादिशेषे णिलोपे तिप इकारलोपे 'अररम्भत्' इति । अलघुत्वेन सन्वद्भावाऽभावादत्र दीर्घो न ।

ऐर्ष्यियत् (ई० ५१)—ईर्ष्य् धातोः हेतुमण्णौ 'सनाद्यन्ताः–' इति धातुत्वाल्लुङि तिपि आटि वृद्धौ च्लौ च्लेश्चङि तिप इकारलोपे ऐर्ष्य् इ अ त्' इति स्थिते 'ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्' इति वार्तिकेन तृतीयव्यञ्जनस्य तृतीयैकाचश्च द्वित्वं भवति । ततश्च तृतीयव्यञ्जनस्य द्वित्वपक्षे व्यञ्जनापेक्षया तृतीयव्यञ्जनं यकारस्तत्सहितस्य 'यि' इत्येकाचो द्वित्वे णिलोपे 'ऐर्ष्यियत्' इति। तीतीयैकाचो द्वित्वपक्षे अत्र तृतीयैकाचोऽभावेन वार्तिकाप्रवृत्तौ 'अजादेर्द्वितीयस्य' इति 'ष्य' शब्दस्य द्वित्वे अभ्यासादिकार्ये च कृते 'ऐर्षिष्यत्' इति । एवं च 'ऐर्ष्यियत्' इति रूपसिद्ध्यर्थं वार्तिकम् । 'ऐर्षिष्यत्' इति तु 'अजादेर्द्वितीयस्य' इत्यनेनैव सिद्धमिति दिक् ।

इति ण्यन्तप्रकरणम् ।

# अथ सन्नन्तप्रकरणम्

धातोः—इष् धातुका जो कर्म तद्बोधक और इष् धातुके समानकर्तृक अर्थात् इष् धातुका जो कर्ता वही कर्ता हो जिसका ऐसे धातुसे इच्छा अर्थमें सन् प्रत्यय हो, विकल्पसे । जैसे बालकः पठितुमिच्छति–'पिपठिषति' । यहां इष् धातुका कर्ता बालक है और वही बालक पठ धातु ( पठितुम् ) का भी कर्ता है तथा इष्

धातुका पठ् धातु ( पठितुम् ) कर्म भी है इस लिये पठ् धातु से सन् प्रत्यय हुआ।

**जिघत्सति** ( ई० ४२, ४५, ४७)—अत्तुमिच्छतीत्यर्थे 'अद्' धातोः 'धातोः कर्मणः-'इति सनि 'लुङ्सनोर्घस्लृ' इति अदो घस्लादेशे अनुबन्धलोपे 'एकाच उपदेशेऽनुदात्तात्' इति इटो निषेधे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यभ्याससकारस्य लोपे 'कुहोश्चुः' इत्यभ्यासघकारस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'सन्यतः' इत्यभ्यासाऽकारस्य इत्वे 'सः स्यार्धधातुके' इति सस्य तकारे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटि तिपि शपि अनुबन्धलोपे 'अतो गुणे' इति पररूपे उक्तं रूपं निष्पन्नम्।

**चिकीर्षति** ( ई० ४७ )—कर्तुमिच्छतीति विग्रहे कृधातोः 'धातोः कर्मणः—' इति सनि अनुबन्धलोपे 'एकाच उपदेशेऽनुदात्तात्' इतीण्निषेधे 'अज्झनगमां सनि' इति दीर्घे 'इको झल्' इति कित्वाद्गुणाऽभावे 'ऋत इद्धातोः' इति इत्वे रपरत्वे 'किर्स' इति स्थिते 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यभ्यासरेफस्य लोपे 'कुहोश्चुः' इति चुत्वे 'हलि च' इति दीर्घे षत्वे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटि तिपि शपि अनुबन्धलोपे पररूपे 'चिकीर्षति' इति जातम्।

**बुभूषति**—भूधातोः इच्छार्थे सनि 'सनि ग्रहगुहोश्च' इति इण्निषेधे 'इको झल्' इति कित्वाद्गुणाऽभावे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'ह्रस्वः' इत्यभ्यासोकारस्य ह्रस्वे 'अभ्यासे चर्च' इति अभ्यासभकारस्य बत्वे षत्वे 'सनाद्यन्ताः' इति धातुत्वाल्लटि तिपि शपि अनुबन्धलोपे पररूपे 'बुभूषति' इति।

**जिघांसति** ( ई. ५२ )—हन्तुमिच्छतीति विग्रहे हन्धातोः सनि 'अज्झनगमां सनि' इति दीर्घे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे ह्रस्वे हलादिशेषे 'सन्यतः' इतीत्वे 'अभ्यासाच्च' इति कुत्वे 'नश्च' इत्यनुस्वारे 'जिघांस्' इति स्थिते 'सनाद्यन्ताः—' इति धातुत्वाल्लटि तिपि शपि पररूपे 'जिघांसति' इति।

**जिघृक्षति** ( ई. ४६, ४९ )—ग्रहितुमिच्छति इति विग्रहे 'ग्रह' धातोः सनि 'सनि ग्रहगुहोश्च' इति इट्निषेधे 'रुदविदमुष—' इति सनः कित्वात् 'ग्रहिज्या' इति सम्प्रसारणे 'गृह् स' इत्यवस्थायां हकारादिणः परस्य सस्य षत्वे प्राप्ते तम्प्रबाध्य 'हो ढः' इति हस्य ढत्वे 'एकाचोबशः—' इति भष्भावे 'षढोः कः सि' इति ढस्य कत्वे कात्परस्य सस्य षत्वे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'उरत्' इत्यत्वे रपरत्वे

हलादिशेषे 'अभ्यासे चर्च' इति जत्वे 'सन्यतः' इतीत्वे 'सनाद्यन्ताः-' इति धातुत्वाल्लटि तिपि शपि पररूपे 'जिघृक्षति' इति।

जुघुक्षति ( ई. ५१ )—गूहितुमिच्छतीति विग्रहे ऊकारेत्संज्ञकगूह्धातोः सनि 'हलन्ताच्च' इति सनः कित्वाद् गुणाऽभावे 'सनि ग्रहगुहोश्च' इति ऊदित्वात्प्राप्तेटो निषेधे 'गूह् स' इति स्थिते दकारादिणः परस्य सस्य षत्वे प्राप्ते तम्प्रबाध्य हस्य ढत्वे 'एकाचः-' इति गस्य भष्भावे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे 'अभ्यासे चर्च' इति गस्य जत्वे 'षढोः कः सि' इति कत्वे षत्वे धातुत्वाल्लटि तिपि शपि पररूपे 'जुघुक्षति' इति।

जिगलिषति ( ई. ४५ )—गिलितुमिच्छतीति विग्रहे सनि द्वित्वे अभ्यासत्वे उरदत्वे हलादि शेषे गस्य जत्वे 'सन्यतः' इतीत्वे 'किरश्च पञ्चभ्यः' इति इटि 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे 'अचि विभाषा' इति गिरतेः रेफस्य लत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे उक्तं रूपं सिद्धम्। लत्वाऽभावपक्षे 'जिगरिषति' इति। 'वृतो वा' इति इटो दीर्घस्तु न, 'अत्रेटो दीर्घो नेष्टः' इति वार्तिकेन तन्निषेधात्।

दुद्यूषति–दिदेविषति ( ई. ५०,५२ )—दिव्यतुमिच्छतीति विग्रहे दिव्धातोः सनि 'सनीवन्तर्ध-' इति इटि अझलादित्वेन 'इको झल्' इत्यस्याप्रवृत्त्या कित्वऽभावे लघुपधगुणे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे ह्रस्वे च कृते 'सन्यतः' इति इत्वे सस्य षत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'दिदेविषति' इति। इडभावपक्षे 'च्छ्वोः शूडनुनासिके च' इति वस्य ऊठि दकारादिकारस्य यणि 'द्यू स' इति स्थिते 'सन्यङोः' इत्यनेन 'द्यू' इत्यस्य द्वित्वे अभ्यासत्वे हलादिशेषे 'अज्झनगमां सनि' इति पर्यन्यवल्लक्षणप्रवृत्त्या दीर्घे षत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'दियूषति' इति।

ईप्सति ( ई. ४४,४९,५३ )—आप्तुमिच्छतीति विग्रहे लृकारेत्संज्ञक 'आप्' धातोः सनि 'सन्यङोः' इति द्वित्वात् पूर्व 'आप्ज्ञप्यृधामीत्' इति ईत्वे ततो द्वित्वे अभ्यासत्वे 'अत्र लोपोऽभ्यासस्य' इति अभ्यासलोपे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'ईप्सति' इति।

अर्दिधिषति ( ई. ५० )—अर्धितुमिच्छतीति विग्रहे ऋध्धातोः सनि 'सनीवन्तर्ध-' इति विभाषया इटि सनः सादित्वाभावात् ईत्वाभावे गुणे रपरत्वे 'अर् ध् इ स' इति स्थिते 'सन्यङोः' इति 'धिस्' इत्यस्य द्वित्वे अभ्यासत्वे हलादिशेषे धस्य जश्त्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि षत्वे पररूपे 'अर्दिधिषति' इति।

ईर्त्सति ( ई. ५० )—ऋधेः सनि 'सनीवन्तर्ध'ेति इडभावपक्षे 'आप्ज्ञप्यृधामीत्' इति ऋकारस्य ईत्वे रपरत्वे धस्य चर्त्वे 'नन्द्राः संयोगादयः' इति रेफवर्जयित्वा 'अजादेर्द्वितीयस्य' इति 'त्स' इत्यस्य 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'ईर्त्सति' इति ।

दिदम्भिषति ( ई० ४८ )—दम्भितुमिच्छतीति विग्रहे सनि 'सनीवन्तर्ध-' इति इटि, इट्पक्षे सनो झलादित्वाभावेन कित्वाऽभावात् नलोपाभावे 'सन्यङोः' इति 'दम्भ्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'सन्यतः' इत्यभ्यासस्य इत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे षत्वे 'दिदम्भिषति' इति । इडभावपक्षे— 'धिप्सति-धीप्सति' इति ।

धिप्सति ( ई. ४८ )—दम्भितुमिच्छतीति विग्रहे सनि 'सनीवन्तर्ध-इति इडभावे 'दम्भ इच्च' इति इत्वपक्षे 'दिम्भ् स' इति स्थिते 'हलन्ताच्च' इत्यत्र हल्ग्रहणस्य जातिपरत्वेन कित्वात् नलोपे 'एकाचोबशः-' इति दस्य धत्वे भस्य चर्त्वेन पत्वे 'धिप्स्' इति सन्नन्तस्य द्वित्वे 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपे धातुत्वाल्लटि तिपि शपि पररूपे 'धिप्सति' इति । ईत्वपक्षे 'धीप्सति' इति ।

तितनिषति-तितांसति-तितंसति ( ई. ४५ )—तनितुमिच्छतीति विग्रहे तनोतेः सनि 'तनिपतिदरिद्रातिभ्यः सनो वा इड् वाच्यः' इति वार्तिकेन इटि द्वित्वे अभ्यासत्वे हलादिशेषे 'सन्यतः' इति इत्वे षत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि उक्तं रूपं सिद्धम् । इडभावे तु 'तनोतेर्विभाषा' इत्युपधायाः दीर्घे द्वित्वे अभ्यासत्वे हलादिशेषे अभ्यासाकारस्य ह्रस्वे 'सन्यतः' इति इत्वे नस्यानुस्वारे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'तितांसति' इति । दीर्घाऽभावे 'तितंसति' इति ।

जुगुप्सते ( ई. ४४ )—गुपेर्निन्दायां 'गुप्तिज्किद्भ्यः सन्' इति स्वार्थे सनि द्वित्वे अभ्यासत्वे हलादिशेषे [नस्य चुत्वे 'हलन्ताच्च' इति कित्वाद्गुणाऽभावे 'पूर्ववत्सनः' इति आत्मनेपदे तङि टेरेत्वे शपि पररूपे 'जुगुप्सते' इति ।

दीदांसति (ई० ४०)—दानेरार्जवेऽर्थे तस्मात् 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' इति स्वार्थे सनि द्वित्वादिकार्योत्तरमभ्यासस्येकारस्य दीर्घे च कृते नस्यानुस्वारे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'दीदांसति' इति ।

इति सन्नन्तप्रकरणम् ।



# अथ यङन्तप्रकरणम्

अबोभूयिष्ट (ई० २४)—पुनः पुनरतिशयेन वा अभूत् इति विग्रहे भूधातोः 'धातोरेकाचः—' इति यङि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे ह्रस्वे 'गुणो यङ्लुकोः' इति गुणे 'अभ्यासे चर्च' इति भस्य बत्वे 'सनाद्यन्ताः—' इति धातुत्वाल्लुङि ङित्वादात्मनेपदे तप्रत्यये अटि च्लौ च्लेः सिचि इटि अनुबन्धलोपे 'अतो लोपः' इत्यल्लोपे षत्वे ष्टुत्वे तत्सिद्धिः।

वाव्रज्यते (ई० ४५, ४७)—कुटिलं व्रजतीति विग्रहे व्रज्धातोः 'नित्यं कौटिल्ये गतौ' इति यङि 'सन्यङोः इति द्वित्वे अभ्यासत्वे हलादिशेषे 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घे 'सनाद्यन्ताः' इति धातुत्वाल्लटि तप्रत्यये शपि अनुबन्धलोपे षररूपे टेरेत्वे उक्तं रूपं जातम्।

वाव्रजाञ्चक्रे (ई० २७)—व्रज्धातोर्यङि द्वित्वे अभ्यासकार्ये 'दीर्घोऽकितः' इति दीर्घे 'सनाद्यन्ताः—' इति धातुत्वाल्लिटि अनेकाच्त्वादाम्प्रत्यये 'वाव्रज् य आम् लिट्' इति स्थिते 'आदेः परस्ये'ति सहकारेण 'यस्य हलः' इति यलोपे 'अतो लोपः' इत्यल्लोपे 'आमः' इति लिटो लुकि लिट्परककृञोऽनुप्रयोगे 'वाव्रज् आम् कृ लिट्' इति स्थिते लिटो लस्थाने तप्रत्यये तस्य एशि 'लिटि धातोरनभ्यासस्य' इति कृञो द्वित्वे अभ्यासकार्ये मस्यानुस्वारे परसवर्णे यणि 'वाव्रजाञ्चक्रे इति।

चेक्रीयते (ई० ४८)—पुनः पुनः करोतीति विग्रहे कृधातोर्यङि 'रीङ् ऋतः' इति रीङि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे ह्रस्वे चर्त्वे 'गुणो यङ्लुकोः' इति गुणे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटि यङो ङित्वादात्मनेपदे तङि टेरेत्वे शपि पररूपे 'चक्रीयते' इति।

वरिवृत्यते (ई० ४४, ५३)—पुनः पुनः वर्तते इति विग्रहे वृत्धातोर्यङि द्वित्वे अभ्यासत्वे 'उरत्' इत्यत्वे रपरे हलादिशेषे 'व वृत् य' इति जाते 'रीगृदुपधस्य च' इत्यभ्यासस्य रीगागमे धातुत्वाल्लटि तप्रत्यये शपि पररूपे टेरेत्वे तत्सिद्धिः।

नरीनृत्यते (ई० ४७)—पुनः पुनरतिशयेन वा नृत्यतीति विग्रहे नृत्धातोः 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति यङि 'सन्यङोः' इति द्वित्वे अभ्यासकार्ये 'रीगृदुपधस्य च' इति रीगागमे धातुत्वाल्लटस्तप्रत्यये एत्वे शपि पररूपे 'क्षुभ्नादिषु च' इति णत्वनिषेधे तत्सिद्धिः।

वरीव्रश्च्यते ( ई० ४५ )—पुनः पुनः वृश्चतीति विग्रहे व्रश्चधातोः यङि ङित्वाद् 'ग्रहिज्ये'ति सम्प्रसारणे पूर्वरूपे 'सन्यङोः' इति द्वित्वे उरदत्वे रपरत्वे हलादिशेषे 'रीगृत्वत इति वाच्यम्' इति अभ्यासस्य रीगागमे 'वरीवृश्च्य' इति यङन्तस्य 'सनाद्यन्ताः—' इति धातुत्वाल्लटि यङो ङित्वादात्मनेपदे तङि टेरेत्वे शपि पररूपे 'वरीव्रश्च्यते' इति ।

चञ्चूर्यते ( ई० ५० )—पुनः पुनः चरतीति विग्रहे चर् धातोः यङि 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'चरफलोश्च' इति नुकि 'नुगित्यनेन अनुस्वारोपलक्ष्यते' 'स च पदान्तवद्वाच्यः' इत्युक्तत्वात् 'वा पदान्तस्य' इत्यनेन परसवर्णे 'उत्परस्यातः' इत्युत्वे 'हलि चे'ति दीर्घे यङन्तस्य धातुत्वाल्लटि ङित्वात्तङि टेरेत्वे शपि पररूपे 'चञ्चूर्यते' इति । परसवर्णाऽभावे 'चंचूर्यते' इति ।

जञ्जप्यते (ई० ४१, ५२)—गर्हितं जपतीति विग्रहे जप्धातोर्यङि द्वित्वे अभ्यासत्वे हलादिशेषे 'जपजभदहदशभञ्जपशां च' इति सूत्रेण अभ्यासस्य नुकि अनुस्वारे परसवर्णे यङन्तस्य धातुत्वाल्लटि ङित्वात् तङि टेरेत्वे शपि पररूपे उक्तं रूपं सिद्धम् ।

जेगिल्यते ( ई० ४८ )—गर्हितं गिलतीति विग्रहे गॄधातोर्यङि 'ॠत इद्धातोः' इति इत्वे रपरत्वे 'ग्रो यङि' इति रेफस्य लत्वे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे चुत्वे 'गुणो यङ्लुकोः' इति गुणे यङन्तस्य धातुत्वाल्लटि ङित्वात्तङि टेरेत्वे शपि पररूपे उक्तं रूपं जातम् ।

जेघ्नीयते ( ई० ४४ )—पुनः पुनरतिशयेन वा हन्तीति विग्रहे हन्धातोर्यङि 'हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः' इति वार्तिकेन घ्नीभावे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे ह्रस्वे चुत्वे 'गुणो यङ्लुकोः' इति अभ्यासस्य गुणे धातुत्वाल्लटि ङित्वात्तङि टेरेत्वे शपि पररूपे उक्तं रूपं सिद्धम् ।

शाशय्यते—( ई० ४९ )—शीङ्धातोर्यङि 'अयङ्यि क्ङिति' इति अयङि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे 'दीर्घोऽकितः' इति दीर्घे यङन्तस्य धातुत्वाल्लटि ङित्वात्तङि टेरेत्वे शपि पररूपे उक्तं रूपं सिद्धम् ।

चेकीयते ( ई० ४३ )—चाय् धातोर्यङि 'चायः की' इति क्यादेशे द्वित्वे अभ्यासत्वे ह्रस्वे चुत्वे गुणे तङि शपि टेरेत्वे पररूपे उक्तं रूपं सिद्धम् ।

देध्मीयते ( ई० ४६ )—ध्माधातोर्यङि 'ईघ्राध्मोः' इति ईत्वे द्वित्वे अभ्यासत्वे ह्रस्वे हलादिशेषे 'अभ्यासे चर्च' इति जश्त्वे 'गुणो यङ्लुकोः' इति अभ्या-

**सुपानः** ( ई. ४५,५१ )—सुष्ठु पीयते इति सुपानः। सुपूर्वकात् पाधातोः 'ईषद्दुस्सुषु-' इति प्राप्तं खलं प्रबाध्य 'आतो युक्' इति युचि अनुबन्धलोपे 'युवोरनाकौ' इति योरनादेशे सवर्णदीर्घे विभक्तिकार्ये 'सुपानः' इति।

**दुष्पानः** ( ई० ४८ )—इत्यपि पूर्ववत्।

**पीत्वा** ( ई० ४६ )—पाधातोः 'अलं खल्वोः प्रतिषेधयोः क्त्वा' इति क्त्वाप्रत्यये 'घुमास्था-' इतीत्वे अव्ययत्वात् सुब्लुकि 'पीत्वा' इति।

**शमित्वा** ( ई० २४ )—शम्धातोः क्त्वाप्रत्यये अनुबन्धलोपे 'उदितो वा' इति विभाषया इटि अनुबन्धलोपे प्रातिपदिकत्वात् सौ 'क्त्वातोसुन्-' इत्यव्ययत्वात् सुब्लुकि 'शमित्वा' इति। इडभावपक्षे 'अनुनासिकस्य क्विझलोः क्ङिति' इत्यात्वे अनुस्वारे परसवर्णे 'शान्त्वा' इति सिद्धं भवति।

**हित्वा**—( ई० ४५, ५० )—धाधातोः 'समानकर्तृकयोः-' इति क्त्वाप्रत्यये अनुबन्धलोपे 'दधातेर्हिः' इति धास्थाने 'हि' इत्यादेशे प्रातिपदिकत्वात् सौ अव्ययत्वात् सुब्लुकि 'हित्वा' इति। 'ओहाक् त्यागे' इत्यस्य क्त्वायां तु 'जहातेश्च' इत्यनेन हित्वं बोध्यम्। 'ओहाङ् गतौ' इति धातोः क्त्वायां तु 'हात्वा' इति भवति। अत्र 'जहातेश्च' इति हित्वं तु न सूत्रे जहातेरिति निर्देशात्।

**स्मारं स्मारम्** ( ई० ५३ )—स्मृधातोः 'आभीक्ष्ण्ये णमुल् च' इति णमुलि अनुबन्धलोपे 'अचो ञ्णिति' इति वृद्धौ रपरत्वे 'नित्यवीप्सयोः' इति द्वित्वे कृदन्तत्वात् सौ 'कृन्मेजन्तः' इति मान्तत्वादव्ययसंज्ञायां सुब्लुकि प्रथममकारस्यानुस्वारे 'स्मारं स्मारम्' इति। स्मृत्वा स्मृत्वा इत्यर्थः।

**जावज्जीवमधीते** ( ई० ४० )—'यावति विन्दजीवयोः' इति सूत्रेण यवच्छब्दे उपपदे जीवधातोर्णमुलि सुब्लुकि विभक्तिकार्ये ष्टुत्वे 'जावज्जीवम्' इति।

**समूलकाषं कषति** ( ई० ४२ )—'निमूलसमूलयोः कषः' इति सूत्रेण समूलमिति कर्मण्युपपदे कष्धातोर्णमुलि सुब्लुकि वृद्धौ स्वादिकार्ये 'समूलकाषम्' इति।

**पादघातं हन्ति** ( ई० ४१ )—पादेन हन्तीत्यर्थे 'करणे हनः' इति हन्धातोर्णमुलि सुब्लुकि 'हनस्तोः—' इति तकारान्तादेशे 'हो हन्तेः-' इति हस्य घत्वे उपधावृद्धौ विभक्तिकार्ये उक्तं रूपं जातम्।

**धनपोषम्** ( ई० ४० )—धनेन पुष्णातीत्यर्थे करणोपपदात् पुष्धातोः 'स्वे पुषः' इति णमुलि सुब्लुकि 'पुगन्त-' इति गुणे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

इति उत्तरकृदन्तप्रकरणम्।



# अथ कारकप्रकरणम्

प्रातिपादिकार्थ०—प्रातिपदिकार्थमात्रे, लिङ्गमात्रे, परिमाणमात्रे, संख्यामात्रे च प्रथमा स्यादित्यर्थः। ननु 'प्रवृत्तिनिमित्तं, व्यक्तिः, लिङ्गं चेत्यादि त्रिकं, चतुष्कं, पञ्चकं वा प्रातिपदिकार्थः इति पक्षे लिङ्गस्याऽपि प्रातिपदिकार्थत्वात् लिङ्गग्रहणं व्यर्थमिति चेन्न, 'यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेन उपस्थितिः स प्रातिपदिकार्थः' इत्युक्तत्वात्। अत्र सूत्रे द्वन्द्वान्ते श्रूयमाणस्य 'मात्र' शब्दस्य 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायात् प्रातिपदिकार्थे, लिङ्गे, परिमाणे वचने च प्रत्येकमन्वयः। नन्वेवं लिङ्गपरिमाणयोः केवलयोः प्रातिपदिकार्थं विना काप्युपस्थितेरभावात् लिङ्गमात्रे, परिमाणमात्रे च प्रथमा स्यादित्यर्थोऽसङ्गतिः स्यादिति चेन्न, लिङ्गमात्राद्याधिक्ये, परिमाणमात्राद्याधिक्ये चेत्यर्थस्य च मूले प्रतिपादितत्वात्। वचनं संख्येति, पूर्वाचार्यैस्तथा संज्ञाकारणात्।

'प्रातिपदिकार्थमात्रे' इत्यस्योदाहरणम् 'उच्चैः, नीचैः, कृष्णः, श्रीः, ज्ञानम्' इत्यादि। अत्र 'सदृशं त्रिषु लिङ्गेषु' इति स्मरणात् अव्यये कस्यापि लिङ्गस्यानुपस्थितिरिति अव्ययम्— प्रातिपदिकार्थमात्रस्योदाहरणं युक्तम्। एवं वासुदेववाचककृष्णशब्दे पुंस्त्वस्य, श्रीशब्दे स्त्रीत्वस्य, ज्ञानशब्दे नपुंसकत्वस्य च नियमेन भानमस्ति, तेषां नियतलिङ्गत्वात्, अतस्तेषु लिङ्गानामपि प्रातिपदिकार्थान्तर्भावात् तेषामपि 'प्रातिपदिकार्थमात्रे' इत्यस्योदाहरणं निर्बाधमेवेति ध्येयम्।

'लिङ्गमात्राद्याधिक्ये' इत्यस्योदाहरणं तटः, तटी तटम् इत्यादि। 'तटं त्रिषु' इत्यमरकोशादत्र लिङ्गानामनियतोपस्थितिकतया प्रातिपदिकार्थानन्तर्भावात् लिङ्गमात्राद्याधिकस्योदाहरणं सुस्पष्टम्।

'परिमाणमात्रे' इत्यस्योदाहरणं 'द्रोणो व्रीहिः' इत्यत्र 'द्रोणः' इति। अत्र द्रोणपदात् द्रोणत्वद्रोणपुंस्त्वार्थानां नियमेनोपस्थित्या प्रातिपदिकार्थत्वेऽपि परिमाणत्वेन परिमाणस्य नियमेनानुपस्थितेः प्रातिपदिकार्थत्वाऽभावेन परिमाणरूपेऽर्थे परिमाणग्रहणेन प्रथमा। तथा च द्रोणपदेन द्रोणत्वावच्छिन्नद्रोणस्योपस्थित्या तस्य सुप्रत्ययोपस्थितपरिमाणार्थेन 'सामान्यविशेषयोरभेदेनान्वयः' इति व्युत्पत्त्याऽभेदान्वये सुप्रत्ययार्थपरिमाणस्य व्रीहिपदेनोपस्थितव्रीह्यर्थे 'राज्ञः पुरुषः' इत्यादाविव आकांक्षाभास्यपरिच्छेद्यपरिच्छेदकभावसम्बन्धेनान्वयः इति 'द्रोणरूपं यत् परिमाणं तत्परिच्छिन्नो व्रीहिः' इत्यर्थः सिद्धयति। द्रोणपदात् प्रातिपदिकार्थमात्रे प्रथमा

प्रवृत्तौ तु 'नामार्थनामार्थयोरभेदादतिरिक्तसम्बन्धोऽव्युत्पन्नः' इति व्युत्पत्त्या द्रोण-व्रीहिपदार्थयोरभेदेनैवाऽन्वयः स्यादिति द्रोणाऽभिन्नो व्रीहिरित्यनिष्टार्थापत्तिरिति ।

'संख्यामात्रे' इत्यस्योदाहरणम् 'एकः, द्वौ, बहवः इत्यादि । नन्वत्र एकत्व-द्वित्वबहुत्वानां नियमेनोपस्थित्या 'प्रातिपदिकार्थे' इत्येव सिद्धे सूत्रे वचनग्रहणं व्यर्थमिति, चेन्न प्रकृतिभिरेव एकत्वादीनामुक्तत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन प्रथमाविभक्तेरप्राप्तौ तदर्थं वचनग्रहणस्यावश्यकत्वात् ।

**कर्तुरीप्सीततमं कर्म** ( ई० ४८ )—अत्र 'कारके' इत्यनुवृत्तं प्रथमया विपरिणम्यते । आप्तुमिष्यमाणम्—ईप्सितम्, अतिशयेन ईप्सितम्-ईप्सिततमम् । धातूपात्तव्यापाराश्रयः कर्ता । केनाप्तुमित्याकाङ्क्षायां कर्तृविशेषणीभूतव्यापारेणेत्यर्थाल्लभ्यते । ततश्च 'कर्तुः क्रिययाऽऽप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात्' इति सूत्रार्थः सम्पद्यते । उदाहरणं तु 'हरिं भजति' इत्यादि । पूजादिव्यापारेण हरिं तोषयतीत्यर्थः । कर्तृनिष्ठपूजनादिव्यापारप्रयोज्यतुष्टिरूपफलाश्रयत्वात् हरिः कर्म ।

**गां दोग्धि पयः** ( ई० ४२, ४१ )—गोः सकाशात् पयो दोग्धि, इति शाब्दबोधः । अत्र 'गोः' अपादानत्वाऽविवक्षया कर्मत्वविवक्षायाम् 'अकथितं च' इति कर्मसंज्ञायां 'कर्मणि द्वितीया' इति द्वितीया भवति ।

**गर्गान् शतं दण्डयति** ( ई० ५३ )—ताडनादिना गर्गेभ्यः सुवर्णशतं गृह्णातीत्यर्थः । अत्र 'गर्गेभ्यः' इत्यत्र अपादानत्वमनादृत्य कर्मत्वविवक्षायाम् 'अकथितं च' इति कर्मसंज्ञायां द्वितीयेति बोध्यम् ।

**बलिं भिक्षते वसुधाम्**—'अकथितं चे'ति सूत्रे 'अर्थनिबन्धनेयं संज्ञे'ति कैयटादिभिर्व्याख्यातत्वेन दुहाद्यर्थकधात्वन्तरयोगेऽपि द्विकर्मत्वं लभ्यते, ततश्चात्र याचनार्थक 'भिक्ष' धातुयोगेऽपि बलेरपादानत्वाऽविवक्षया कर्मत्वविवक्षायां कर्मत्वाद् द्वितीया भवति ।

**कुरून् स्वपिति** (ई० ५२)—कुरुषु निद्रां करोतीत्यर्थः । कुर्वादिशब्दा जनपद विशेषेषु स्वभावान्नित्यबहुवचनान्ताः । अत्र 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' इति वार्तिकेन कर्मत्वात् द्वितीयेति ज्ञेयम् ।

**क्रोशमास्ते** ( ई० ५१ )—अत्र 'अकर्मकधातुभिर्योगे—' इति वार्तिकेन कर्मत्वाद् द्वितीयेति ।

**हृक्रोरन्यतरस्याम्** ( ई० ५१ )—हृक्रोरणौ यः कर्ता, स णौ वा कर्म स्यादिति सूत्रार्थः । 'हारयति कारयति वा भृत्यं भृत्येन वा कटम्' इत्युदाहरणम् ।

'हरति, करोति वा कटं भृत्यः' तं हारयति, कारयति वेत्यर्थः। अत्र प्रयोज्यकर्तुर्भृत्यस्य कर्मत्वविकल्पः।

**अधिशीङ्स्थासां कर्म** ( ई० ४७ )—'अधिपूर्वाणामेषां ( शीङ्–स्था–आस् धातूनाम् ) आधारः कर्म स्यात्' इति सूत्रार्थः। 'अधिशेते, अधितिष्ठति, अध्यास्ते वा वैकुण्ठं हरिः' इत्युदाहरणम्। अधिरत्रत्र सप्तम्यर्थस्याधारस्य द्योतकः। वैकुण्ठे शेते, तिष्ठति, आस्ते वा हरिरित्यर्थः।

**अभिनिविशते सन्मार्गम्** ( ई० ४९ )—अत्र 'अभिनिविशश्च' इत्यनेन अभिनीत्येतत्संघातपूर्वस्य विशतेराधारस्य 'सन्मार्गं' इत्यस्य कर्मत्वात् द्वितीया भवति।

**पापेऽभिनिवेशः** ( ई० ५२ )—'अभिनिविशश्चे'ति सूत्रे "परिक्रयणे सम्प्रदानम्' इति सूत्रात् मण्डूकप्लुत्या अन्यतरस्यां ग्रहणानुवर्तनात् अत्र अभिनीत्येतत्संघातपूर्वस्य 'पापे' इत्यस्य कर्मसंज्ञा न भवति।

**उपान्वध्याङ्वसः** ( ई० ४७, ४८ )—उप, अनु, अधि, आङ् पूर्वस्य वसतेराधारः कर्म स्यादिति सूत्रार्थः। 'उपवसति, अनुवसति, अधिवसति, आवसति वा वैकुण्ठं हरिः' इत्युदाहरणम्। अत्रोपसर्गाः आधारद्योतकाः। 'वैकुण्ठे वसति' इत्यर्थः।

**उभसर्वतसोः** (ई० २६)—उभशब्द–सर्वशब्दप्रकृतिकतसन्तयोः प्रयोगे सति द्वितीया कार्या, धिक्शब्दस्य प्रयोगे सति द्वितीया कार्या, आम्रेडितान्तेषु ( कृतद्विर्वचनेषु ) उपर्यादिषु ( उपरि–अधि–अधस्–इत्येतेषु ) त्रिषु प्रयुज्यमानेषु द्वितीया कार्या, ततः उक्तप्रदेशेभ्योऽन्यत्रापि ( अभितः, परितः, समया निकषा, हा, प्रति, योगेऽपि ) द्वितीया कार्येत्यर्थः।

**ग्रामं समया** ( ४८, ४९ )—ग्रामस्य समया ( समीपे ) इत्यर्थः। अत्र 'समया' योगे ग्रामस्येत्यस्य 'अभितःपरितः–' इति कर्मत्वाद् द्वितीया भवति।

**निकषा लङ्काम्** ( ई० ४७, ५२ )—'निकषा' इत्यस्य अन्तिके इत्यर्थः। अत्र 'अभितः परितः–' इति वार्तिकेन कर्मत्वात् द्वितीया भवति।

**अन्तरेण हरिं न सुखम्** ( ई० ४१ )—अत्र 'अन्तराऽन्तरेण युक्ते' इति सूत्रेण 'अन्तरेण' इत्यव्यययोगात् हरिशब्दाद् द्वितीया भवति।

**जपमनुप्रावर्षत्** ( ई० ४० )—कदा पर्जन्योऽवर्षदिति प्रश्ने उत्तरमिदम्। अत्र 'अनुर्लक्षणे' इति सूत्रेण कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया भवति। सम्बन्धश्चात्र लक्ष्यलक्षणभावः।

लक्षणत्वं चात्र 'ज्ञानजनकज्ञानविषयत्वम्'। लक्ष्यत्वं च 'ज्ञानजन्यज्ञानविषयत्वम्' 'जपमनुप्रावर्षत्' इत्यत्र ज्ञानं वर्षणज्ञानं, तज्जनकज्ञानं जपज्ञानं, तद्विषयता वर्षणे, इति लक्षणसमन्वयः। ननु यदैव ब्राह्मणद्वारा जपो जातस्तदैव देवकर्तृकं वर्षणमपि जातमिति वर्षणे जपो हेतुर्भवति। तथा च 'हेतौ' इति सूत्रेण परत्वादत्र तृतीया कुतो नेति चेत् सत्यम्, हेतुत्वाऽविवक्षायां 'वृक्षमनु विद्योतते विद्युत्' इत्यादौ लक्षणे कर्मप्रवचनीयसंज्ञाया अवकाशः। 'धनेन कुलम्' इत्यादौ हेतुतृतीयाया अवकाशः। 'जपमनुप्रावर्षत्' इत्यत्र तु तदुभयमपि प्रसक्तम्, एवं सति चात्र 'अनुर्लक्षणे' इत्यनेन पुनः कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात् द्वितीयैव भवतीति दिक्।

**वृक्षं वृक्षं प्रति, परि, अनु वा विद्योतते विद्युत्** (ई० ४७)—लक्ष्य-लक्षणभावसम्बन्धो द्वितीयार्थः, स च प्रत्यादिद्योत्यः। वृक्षेण लक्ष्यमाणा विद्युत् विद्योतते इत्यर्थः। अत्र 'लक्षणेत्थम्भूताख्यान—' इति सूत्रेण लक्षणेऽर्थे कर्मप्रवचनीयसंज्ञायां सत्यां कर्मप्रवचनीययोगे द्वितीया भवति।

**कालाध्वनोरत्यन्तसंयोगे** (ई० ४८)—कालाध्वनोः अत्यन्त (अविच्छिन्न) संयोगे गम्ये द्वितीया स्यादित्यर्थः। 'मासं कल्याणी' इत्याद्युदाहरणम्, त्रिंशद्दिनात्मको मासः, तस्मिन्नवच्छिन्नमङ्गलवान् भवतीत्यर्थः।

**मासमधीते** (ई० ५३)—त्रिंशद्दिनात्मके प्रतिदिनमुचितकाले निरन्तरमधीत इत्यर्थः। अत्र 'कालाध्वनोः—' इति सूत्रेण द्वितीया भवति।

**साधकतमं करणम्** (ई० ५०)—क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यादित्यर्थः। उदाहरणं तु 'रामेण बाणेन हतो वाली' इति। रामकर्तृकबाणकरणक-हिंसाक्रियाविषयो वालीत्यर्थः। अत्र हननक्रियायां रामस्य स्वातन्त्र्यविवक्षया 'स्वतन्त्रः कर्ते'ति कर्तृसंज्ञा, बाणस्य च हननक्रियायामत्यन्तोपकारकत्वात् 'साधकतमं करणम्' इत्यनेन करणसंज्ञा। ततश्चोभयत्र कर्तृकरणयोस्तृतीया' इत्यनेन तृतीयायां सत्यामुक्तं रूपं सिद्धम्।

**गोत्रेण गार्ग्यः** (ई० ४८, ५०)—**गोत्रमस्य गार्ग्य इत्यर्थः।** अत्र प्रथमा प्राप्ता ताम्प्रबाध्य 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वार्तिकेन तृतीया।

**समेनैति** (ई० ५२)—समं गमनं करोतीत्यर्थः। क्रियाविशेषणमेतत्। कर्मणि द्वितीया प्राप्ता ताम्प्रबाध्य 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया भवति।

**अक्षैरक्षान् वा दीव्यति** (ई० ४०)—अत्र 'दिवः कर्म च' इत्यनेन कर्मसंज्ञा चात् करणसंज्ञा च भवति।

**सहयुक्तेऽप्रधाने ( ई० ५२ )**—सहार्थेन युक्तेऽप्रधाने तृतीया स्यादित्यर्थः। 'पुत्रेण सहागतः पिता' इत्युदाहरणम्। पितुरत्रागमनक्रियासम्बन्धः शाब्दः। पुत्रस्य तु तत्साहित्यगम्य आर्थिक इति तस्याऽप्राधान्यम्।

**येनाङ्गविकारः ( ई० ४२, ४७, ५० )**—येनाङ्गेन विकृतेन अङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यादित्यर्थः। 'अक्ष्णा काणः' इत्युदाहरणम्। अक्षिसम्बन्धि-काणत्ववानित्यर्थः।

**अपवर्गे तृतीया ( ई० ४९, ५२, ५३ )**—अपवर्गः = फलप्राप्तिः, तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यादित्यर्थः। 'अह्ना क्रोशेन वाऽनुवाकोऽधीतः' इत्युदाहरणम्।

**इत्थंभूतलक्षणे ( ई० ४८, ५०, ५१, ५३ )**—अयं प्रकारः इत्थं, तं भूतः = प्राप्तः—इत्थंभूतः। लक्षणं ज्ञापकम्। प्रकारविशेषं प्राप्तस्य ज्ञापके इत्यर्थः। तदाह मूले—कञ्चित् प्रकारं प्राप्तस्य लक्षणे तृतीया स्यादिति। **'जटाभिस्तापसः'** इत्युदाहरणम्। लक्ष्यलक्षणभावोऽत्र तृतीयार्थः। जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः।

**कर्मणा यमभिप्रैति० ( ई० ५२ )**—दानक्रियाकर्मणा कर्ता यमभिप्रैति = सम्बध्नाति, सम्बन्धुमीप्सति वा, तत्कारकं सम्प्रदानसंज्ञकमित्यर्थः।

सम्यक् प्रदीयतेऽस्मै तत् सम्प्रदानम्। स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापारः दाधात्वर्थः। अत एव 'रजकस्य वस्त्रं ददाति' इत्यत्र 'रजकाय वस्त्रं ददाति' इति न भवति।

**विप्राय गां ददाति ( ई० ४९ )**—अत्र देवदत्तादिः कर्ता दानस्य कर्मणः गवा विप्रं सम्बन्धुमिच्छतीति 'कर्मणा यमभिप्रैति—' इति सूत्रेण विप्रस्य सम्प्रदानसंज्ञायां 'चतुर्थी सम्प्रदाने' इति चतुर्थी भवति।

**पत्ये शेते ( ई० ४२ )**—पतिमुद्दिश्य शेते इत्यर्थः। अत्र 'क्रियया यमभिप्रैति—' इति वार्तिकेन सम्प्रदानत्वात् चतुर्थी भवति।

**शताय परिक्रीतः ( ई० ४७ )**—अत्र 'परिक्रयणे सम्प्रदानमन्यतरस्याम्' इति सूत्रेण सम्प्रदानत्वात् चतुर्थी भवति।

**उत्पातेन ज्ञापिते च ( ई० ४९, ५२ )**—आकस्मिकः प्राणिनां शुभाशुभसूचको भूतविकारविशेषः उत्पातः, तेन सूचितेऽर्थे विद्यमानाच्चतुर्थीत्यर्थः। 'वाताय कपिला विद्युत्' इत्युदाहरणम्।

**अग्नये स्वाहा (ई० ५०)**—'नमः स्वस्तिस्वाहा' इति सूत्रेणात्र चतुर्थी भवति।

**ध्रुवमपायेऽपादानम्** ( ई० ५१ )—अपायो विश्लेषः = विभागः, तस्मिन् साध्ये ध्रुवमवधिभूतमपादानं स्यादित्यर्थः। ध्रुवमित्यस्यैव विवरणम्—अवधिभूतमिति। ग्रामादायातीत्युदाहरणम्। आगच्छतीत्यर्थः। अत्र कस्मादायातीत्याकांक्षाविषयत्वात् ग्रामोऽवधिरिति अपादानत्वात् पञ्चमी भवति।

ध्रुवत्वन्तु—'प्रकृतधात्वर्थाऽनाश्रयत्वे सति तज्जन्यविभागाश्रयत्वम्'। इति।

आपादानन्तु—'विभागजनकव्यापारानाश्रयत्वे सति विभागाश्रयत्वम्'। इति।

**जनिकर्तुः प्रकृतिः** ( ई० ४७, ४८, ४९ )—जननं जनिः = उत्पत्तिः। जनेः कर्तेति शेषषष्ठ्या समासः। प्रकृतिः हेतुः। जायमानस्य हेतुरपादानं स्यादित्यर्थः। 'ब्रह्मणः प्रजाः प्रजायन्ते' इत्युदाहरणम्।

**आसनात् प्रेक्षते** ( ई० ४१, ५२ )—आसने उपविश्य प्रेक्षत इत्यर्थः। अत्र 'ल्यब्लोपे कर्मण्यधिकरणे च' इति वार्तिकेन पञ्चमी भवति।

**धूमादग्निमान्** ( ई० ४२ )—ज्ञायते इति शेषः। 'विभाषा गुणेऽस्त्रियाम्' इति सूत्रे विभाषेति योगविभागसामर्थ्याद् धूमस्य अग्निज्ञानहेतुत्वादत्र धूमस्य अगुणत्वेऽपि हेतुत्वात् ततः पञ्चमीति।

**नास्ति घटोऽनुपलब्धेः** ( ई० ४० )—उपलब्धिः = ज्ञानम्, तस्याः अभावः अनुपलब्धिः, तस्या अनुपलब्धेः, नास्ति घटः इति ज्ञायत इति शेषः। 'विभाषा गुणेऽस्त्रियाम्' इति सूत्रे विभाषेति योगविभागादत्र स्त्रियां च पञ्चमी सिद्ध्यति।

**पृथग् रामेण** ( ई० ५१ )—अत्र 'पृथग्विनानाना—' इति सूत्रेण तृतीया भवति।

**अप हरेः, परि हरेः** ( ई० ४१, ५२ )—उभयत्र 'अपपरी वर्जने' इति कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्परिभिः' इति सूत्रेण पञ्चमी भवति।

**आमुक्तेः संसारः** ( ई० ४७, ५२ )—मुक्तिं मर्यादी कृत्य संसार इत्यर्थः। अत्र 'आङ्मर्यादावचने' इत्यनेन कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्परिभिः' इति सूत्रेण पञ्चमी भवति।

**तिलेभ्यः प्रतियच्छति माषान्** ( ई० ४९ )—अत्र 'प्रतिः प्रतिनिधिप्रतिदानयोः' इति सूत्रेण कर्मप्रवचनीयसंज्ञायां 'प्रतिनिधिप्रतिदाने च यस्मात्' इति पञ्चमी भवति।

**एधो दकस्योपस्कुरुते**—एधः = काष्ठं, दकस्य = उदकस्य, उपस्कुरुते = गुणमाधत्ते इत्यर्थः। 'षष्ठी शेषे' इत्यनेनात्र षष्ठी।

**कर्तृकर्मणोः कृतिः** (ई० ५०, ५२)—कृद्योगे कर्तरि कर्मणि च षष्ठी स्यादित्यर्थः। प्रथममुदाहरणं 'कृष्णस्य कृतिः' इति। द्वितीयं तु 'जगतः कर्ता कृष्णः' इति।

**उभयप्राप्तौ कर्मणि** ( ई० ५०, ५३ )—उभयोः=कर्तृकर्मणोः, प्राप्तिर्यस्मिन् कृति तत्र कर्मण्येव षष्ठी स्यादित्यर्थः। 'आश्चर्यो गवां दोहोऽगोपेन' इत्युदाहरणम्।

**कृत्यानां कर्तरि वा** ( ई० ४७, ४९, ५१ )—कृत्यसंज्ञकप्रत्यययोगे कर्तरि षष्ठी वा स्यादित्यर्थः। 'मया मम वा सेव्यो हरिः' इत्युदाहरणम्।

**राज्ञां मतः** ( ई० ५२, ५३ )—'क्तस्य च वर्तमाने' इत्यनेनात्र षष्ठी। ( 'न लोके'ति निषेधस्यापवादोऽयम् )।

**लक्ष्म्याः कामुकः** (ई० ४०)—अत्र 'उकान्तकमेर्योगे षष्ठ्या निषेधो नास्तीत्यर्थक 'कमेरनिषेधः' इति वार्तिकप्रतिप्रसवात् 'न लोकाव्यय–' इति षष्ठीनिषेधो न भवति।

**मुरस्य मुरं वा द्विषन्** ( ई० ५२ )—अत्र 'द्विषः शतुर्वा' इति वार्तिकेन विभाषया षष्ठीनिषेधो भवति।

**व्रजं गामी** ( ई० ५१ )—अत्र 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति सूत्रेण षष्ठीनिषेधो भवति।

**एनपा द्वितीया** ( ई० ४८, ४९ )—एनबन्तेन योगे द्वितीया स्यादित्यर्थः। 'दक्षिणेन ग्रामं ग्रामस्य वा' इत्युदाहरणम्। 'एनपे'ति योगविभागादत्र षष्ठ्यपि।

**आधारोऽधिकरणम्** ( ई० ४८, ४९, ५०, ५३ )—कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यादित्यर्थः। आध्रियतेऽस्मिन्नित्याधारः। स च औपश्लेषिको वैषयिकोऽभिव्यापकश्चेति त्रिधा। उपसमीपे श्लेषः=सम्बन्धः उपश्लेषः, तत्कृतमौपश्लेषिकम्। अस्योदाहरणं 'कटे आस्ते' 'स्थाल्यां पचति' इत्यादि। विषये भवो वैषयिकः। अस्योदाहरणं 'मोक्षे इच्छास्ति' इति। अभि= सर्वतो भावेन, व्याप्नोतीति अभिव्यापकः (यः आधारः सर्वमभिव्याप्नोति स इत्यर्थः)। अस्योदाहरणं 'सर्वस्मिन्नात्मास्ति' इति। सर्वस्मिन्नभिव्याप्य आत्मा वर्तत इत्यर्थः।

**असाधुर्मातुले** (ई० ४१)—अत्र साध्वसाधुप्रयोगे च' इति वार्तिकेन सप्तमी भवति।

**केशेषु चमरीं हन्ति** ( ई० ४७ )—केशनिमित्तं चमरीं हन्तीत्यर्थः। अत्र 'निमित्तात् कर्मयोगे' इत्यनेन सप्तमी भवति।

**यस्य च भावेन भावलक्षणम्** ( ई० ४१, ४७, ५० )—यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यादित्यर्थः। 'गोषु दुह्यमानासु गतः' इत्युदाहरणम्।

षष्ठीचानादरे ( ई० ४१, ४८, ५१, ५२ )—चात् सप्तमीत्यनुकृष्यते, अनादरे इति विषयसप्तमी, 'यस्य चे'ति पूर्वसूत्रमनुवर्तते। अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः इति वृत्तिः। अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्येत ततः षष्ठी सप्तमी चेत्यर्थः। 'रुदति रुदतो वा प्राव्राजीत्' इत्युदाहरणम्।

यतश्च निर्धारणम् ( ई० ४८, ५०, ५२ )—जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम्, यतस्ततः षष्ठी सप्तम्यौ स्तः इत्यर्थः। 'गवां गोषु वा कृष्णा गौर्बहुक्षीरा' इत्याद्युदाहरणम्।

मातरि साधुः ( ई० ५१ )—अत्र 'साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः' इति सूत्रेण सप्तमी भवति।

अधि भुवि रामः, अधि रामे भूः ( ई० ४०, ४२ )—'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' इति सूत्रेण ऐश्वर्ये त्वत्र स्वस्वामिभ्यां पर्यायेण सप्तमी भवति। इति कारकप्रकरणम्।

# अथ समासप्रकरणम्

## तत्रादौ केवलसमासः

समासः कतिविधः—समासः पञ्चधा। तत्र (१) विशेषसंज्ञाविनिर्मुक्तः 'केवलसमासः'। अस्योदाहरणं 'भूतपूर्वः' इति। (२) प्रायेण पूर्वपदार्थप्रधानः 'अव्ययीभावः'। अस्योदाहरणम् 'अधिहरि' इति। (३) प्रायेण उत्तरपदार्थप्रधानः 'तत्पुरुषः'। अस्योदाहरणं 'राजपुरुषः' इति। ( तत्पुरुषभेदः कर्मधारयः, यथा 'नीलोत्पलम्'। कर्मधारयभेदो द्विगुः, यथा 'पञ्चगवम्' )। (४) प्रायेण अन्यपदार्थप्रधानो 'बहुव्रीहिः'। अस्योदाहरणं 'पीताम्बरः' इति। (५) प्रायेण उभयपदार्थप्रधानो 'द्वन्द्वः'। अस्योदाहरणं 'रामकृष्णौ' इति।

भूतपूर्वः ( ई० २६ )—पूर्वं भूतः 'भूतपूर्वः'। 'पूर्व अम् भूत सु' इत्यलौकिकविग्रहे 'सह सुपा' इति समासे 'कृत्तद्धितसमासाश्च' इति समासत्वात् प्रातिपदिकसंज्ञायां 'सुपो धातुप्रातिपदिकयोः' इति सुब्लुकि 'पूर्वभूत' इति जाते 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इति पूर्व-भूतशब्दयोरुभयोरप्युपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति विनिगमकाऽभावादुभयोरपि पूर्वनिपाते प्राप्ते 'भूत पूर्वे चरट्' इति निर्देशात् भूतशब्दस्य पूर्वनिपाते एकदेशविकृतिन्यायेन प्रातिपदिकत्वात् सौ रुत्वे विसर्गे तत्सिद्धिः। इति केवलसमासः।



# अथ अव्ययीभावसमासः

अधिहरि (ई० ४५, ५०)—हरौ इति 'अधिहरि'। हरि ङि अधि इति स्थिते 'अव्ययम्–' इति सूत्रेण अव्ययीभावसमासे समासविधायकसूत्रेऽव्ययमिति प्रथमान्तपदनिर्दिष्टस्य 'अधी'त्यस्य 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्यनेन उपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वनिपाते 'अधि हरि ङि' इति जाते समासत्वात् प्रातिपदिकत्वे 'सुपो धातुः' इति सुब्लुकि एकदेशविकृतन्यायेन प्रातिपदिकत्वात् समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् 'अव्ययादाप्सुपः' इति सोर्लुकि 'अधिहरि' इति सिद्धम्।

अधिगोपम् ( ई० ४२, ५२ )—गां पातीति 'गोपाः' तस्मिन्नित्यधिगोपम्। 'गोपा ङि अधि' इति स्थिते 'अव्ययम्–' इति समासे 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इति 'अधी'त्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वनिपाते समासत्वात्प्रातिपदिकत्वेन सुपो लुकि 'अव्ययीभावश्च' इत्यनेन नपुंसकसंज्ञायाम् 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति 'गोपा' इत्यस्य ह्रस्वत्वे 'अधिगोप इति स्थिते एकदेशविकृतन्यायेन समुदायेन समासत्वात् सौ अव्ययत्वात् सोर्लुकि प्राप्ते 'नाऽव्ययीभावादतोऽम्त्वपञ्चम्याः' इति तन्निषेधे सोरमि 'अमि पूर्वः' इति पूर्वरूपे तत्सिद्धिः।

तृतीयासप्तम्योर्बहुलम् ( ई० ४७ )—'अदन्तादव्ययीभावात् तृतीयासप्तम्योर्बहुलममभावः स्यादित्यर्थः। 'कृष्णस्य समीपमुपकृष्णम्' इत्युदाहरणम्। 'कृष्ण ङस् उप' इत्यलौकिकविग्रहे 'अव्ययम्–' इति सूत्रेण सामीप्यार्थवाचक 'उप' शब्देन सह समासे 'प्रथमानिर्दिष्टम्–' इति 'उप' इत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे समासत्वात्प्रातिपदिकत्वेन सुपो लुकि समुदायात् टाविभक्तौ 'तृतीयासप्तम्योर्बहुलम्' इत्यमादेशे पूर्वरूपे 'उपकृष्णम्' इति। अमादेशाऽभावपक्षे इनादेशे गुणे 'उपकृष्णेन' इति। प्रथमाविभक्तावपि 'अव्ययीभावश्चे'त्यव्ययत्वात् सुब्लुकि प्राप्ते 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति तन्निषेधे सोरमि पूर्वरूपे 'उपकृष्णम्' इति सप्तमीविभक्तौ तु 'उपकृष्णम्–उपकृष्णे इति बोध्यम्।

अनुरूपम् ( ई० ५१ )—रूपस्य योग्यमनुरूपम्। 'अव्ययम्–' इति सूत्रे यथार्थपदेन 'योग्यतावीप्सापदार्थानति वृत्तिसादृश्यानि गृह्यन्ते। ततश्चात्र 'अनु' इत्यव्ययं योग्यतायाम्, अतो यथार्थे वर्तनात् रूपशब्देन सह समासे सुब्लुकि 'अनु'

इत्यस्य उपसर्जनसंज्ञायां पूर्वप्रयोगे समुदायात् सौ 'नाव्ययीभावात्–' इति सोरमि-पूर्वरूपे उक्तं रूपं सिद्धम् ।

**यथाशक्ति ( ई० ५२ )**—शक्तिमनतिक्रम्य इति यथाशक्ति । अत्र यथेत्यव्ययं पदार्थानतिक्रमे वर्तते, इति 'अव्ययम्–' इत्यनेन समासे सुब्लुकि यथाशब्दस्योपसर्जनसंज्ञायां पूर्वप्रयोगे समुदायात् सौ अव्ययत्वात् सुब्लुकि उक्तं रूपं सिद्धम् ।

**पारेगङ्गम् ( ई० ४८ )**—गङ्गायाः पारादिति विग्रहः । अत्र 'पारे मध्ये षष्ठ्या वा' इत्यनेन समासे एदन्तत्वनिपाते च कृते सुब्लुकि 'पारे' इत्यस्योपसर्जनसंज्ञायां पूर्वप्रयोगे 'अव्ययीभावश्च' इत्यव्ययत्वात् 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वे 'नाव्ययीभावात्–' इति सोरमि पूर्वरूपे उक्तं रूपं सिद्धम् ।

**व्याकरणस्य-त्रिमुनि ( ई० ५२ )**—व्याकरणस्य पाणिन्यादयस्त्रयो मुनियो वश्याः इत्यर्थः । अत्र 'संख्या वंश्येन' इत्यनेन समासः । अव्ययत्वात् सुब्लुकि ।

**पञ्चगङ्गम् ( ई० ४७, ५० )**—अत्र 'पञ्चन् आम् गङ्गा आम्' इत्यलौकिकविग्रहे 'समाहारे चायमिष्यते' इति वार्तिकबलात् 'नदीभिश्च' इति समासे सुब्लुकि 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे 'एकविभक्ति चापूर्वनिपाते' इति 'गङ्गा' इत्यस्योपसर्जनत्वाद् 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वे समुदायात् सौ 'अव्ययीभावश्चे'त्यव्ययत्वात् सोर्लुकि प्राप्ते 'नाव्ययीभावात्–' इति निषेधे सोरमि पूर्वरूपे तत्सिद्धिः । तृतीयाविभक्तौ तु 'तृतीयासप्तम्योः–' इति अमादेशे पूर्वरूपे 'पञ्चगङ्गम्' इति । पक्षे इनादेशे गुणे 'पञ्चगङ्गेन' इति । सप्तमीविभक्तौ तु पञ्चगङ्गम्–पञ्चगङ्गे इति रूपद्वयं भवति ।

**लोहितगङ्गम् ( ई० ५१ )**—लोहिता गङ्गा यस्मिन् देशे स लोहितगङ्गं नाम देशः । अत्र 'अन्यपदार्थे च संज्ञायाम्' इत्यनेन समासे सुब्लुकि 'अव्ययीभावश्च' इत्यव्ययत्वात् 'ह्रस्वो नपुंसके–' इति ह्रस्वे सोरमि पूर्वरूपे तत्सिद्धिः ।

**उपशरदम् ( ई० २४ )**—'शरद् ङस् उप' इत्यलौकिकविग्रहे सामीप्यार्थक 'उप' इत्यव्ययेन सह 'अव्ययम्–' इति सूत्रेण समासे 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति टचि अनुबन्धलोपे उपेत्यस्योपसर्जनसंज्ञायां पूर्वनिपाते समासत्वात् प्रातिपदिकत्वेन सुपो लुकि समुदायात् सौ अव्ययत्वात् सुब्लुकि प्राप्ते 'नाव्ययीभावात्–' इति तन्निषेधे सोरमि पूर्वरूपे उक्तं रूपं जातम् । तृतीयासप्तमीविभक्तौ तु 'उपशरदम्–उपशरदेन' 'उपशरदम्–उपशरदे' इति रूपाणि भवन्ति ।

**प्रतिविपाशम् ( ई० ५३ )**—इत्यपि पूर्ववत् ।

**उपजरसम्** ( ई० ४० )—जरायाः समीपम् इति विग्रहः । 'जराया जरस् च' इत्यनेनात्र जरसादेशः समासान्तटच्प्रत्ययश्चेति विशेषः ।

**उपराजम्** ( ई० २६ )—राज्ञः समीपमुपराजमिति लौकिकविग्रहः । राजन् ङस् उप' इत्यलौकिकविग्रहे सामीप्यार्थक 'उप' इत्यव्ययेन सह 'अव्ययम्–' इति समासे 'प्रथमानिर्दिष्टम्–' इत्युपसर्जनसंज्ञायां पूर्वप्रयोगे 'अनश्च' इति टचि अनुबन्ध-लोपे सुब्लुकि भत्वात् 'नस्तद्धिते' इति टिलोपे समुदायात् सौ अव्ययत्वात् सुब्लुकि प्राप्ते 'नाव्ययीभावादि'ति तन्निषेधे सोरमि पूर्वरूपे 'उपराजम्' इति । तृतीयासप्तमी-विभक्तौ तु 'तृतीयासप्तम्योर्बहुलम्' इत्यम्भावे उपराजम्–उपराजेन, 'उपराजम्–उपराजे' इति रूपाणि भवन्ति ।

**उपगिरम्** (ई० ४१)–'गिरेश्च सेनकस्य' इति समासान्तटच्प्रत्ययोऽत्र विशेषः ।

इति अव्ययीभावप्रकरणम् ।



# अथ तत्पुरुषप्रकरणम्

**शङ्कुलाखण्डः** ( ई० ५० )—शङ्कुलया खण्डः शङ्कुलाखण्डः । 'शङ्कुला टा खण्ड सु 'इत्यलौकिकविग्रहे 'तृतीयातत्कृते'ति समासे समासत्वात् प्रातिपदिकत्वेन सुब्लुकि समुदायात् सौ रुत्वे विसर्गे तत्सिद्धम् ।

**मासपूर्वः** ( ई० ४९, ५१ )—मासेन पूर्वः इति विग्रहे 'पूर्वसदृशसमोनार्थ-कलहनिपुणमिश्रश्लक्ष्णैः' इति समासे सुब्लुकि समुदायात् सौ रुत्वे विसर्गे 'मास-पूर्वः' इति । मासात् प्रागुत्पन्नः इत्यर्थः ।

**दध्योदनः** ( ई० ५२ )—दध्ना उपसिक्तः ओदनः इति विग्रहे 'अन्नेन व्यञ्ज-नम्' इति समासे सुब्लुकि यणि समुदायात् सौ रुत्वे विसर्गे तत्सिद्धिः ।

**हरित्रातः** ( ई० ४७ )—हरिणा त्रातः इति विग्रहे 'कर्तृकरणे कृता बहुलम्' इति समासे सुब्लुकि समुदायात् सौ रुत्वे विसर्गे तत्सिद्धिः ।

**नखनिर्भिन्नः** ( ई० ५३ )—'नख भिस् निर्भिन्न सु' इति विग्रहे 'समासप्रत्य-यविधौ प्रतिषेधः' इति समासविधौ तदन्तविधिनिषेधेन 'निर्भिन्ने'त्यस्य कृदन्तत्वाऽ-चात् समासाप्राप्तौ 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषाबलात् 'कर्तृ-करणे कृताबहुलम्' इत्यनेन समासे सुब्लुकि समुदायात् सौ रुत्वे विसर्गे तत्सिद्धम् ।

**चोरभयम् (ई० ४८)**—अत्र चोराद् भयमिति विग्रहे 'पञ्चमी भयेन' इति समासे सुब्लुकि समुदायात् सौ 'परवल्लिङ्गम्-' इति नपुंसकत्वात् सोरमि पूर्वरूपे तत्सिद्धम् ।

**देवपूजकः ( ई० ५२ )**—देवस्य पूजकः इति विग्रहे 'याजकादिभिश्च' इति समासे सुब्लुकि समुदायात् सौ रुत्वे विसर्गे तत्सिद्धिः ।

**सर्वश्वेतः (ई० ४०)**—सर्वेषां श्वेततरः इति विग्रहे 'गुणात्तरेण तरलोपश्च' इति समासे तरप्प्रत्ययस्य लोपे च कृते सुब्लुकि समुदायात् सौ रुत्वे विसर्गे तत्सिद्धिः ।

**क्तेन च पूजायाम् ( ई० ४७ )**—'मतिबुद्धिपूजार्थेभ्यः' इति सूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते इत्यर्थः । 'राज्ञां मतः' इत्याद्युदाहरणम् ।

**पूर्वकायः ( ई० ४७ )**—पूर्वं कायस्येति विग्रहे 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' इति समासे सुब्लुकि समुदायात् सौ रुत्वे विसर्गे 'पूर्वकायः' इति ।

**अपरकायः ( ई० ४८ )**—अपरं कायस्येति विग्रहे 'पूर्वापरा-' इति समासे सुब्लुकि समुदायात् सौ रुत्वे विसर्गे तत्सिद्धिः ।

**अर्धपिप्पली ( ई० ४८ )**—'अर्ध सु पिप्पली ङस्' इत्यलौकिकविग्रहे 'अर्धं नपुंसकम्' इति समासे समासशास्त्रघटकप्रथमान्तपदनिर्दिष्ट 'अर्ध सु' इत्यस्य उपसर्जनसंज्ञायां पूर्वनिपाते सुब्लुकि समुदायात् सौ विभक्तिकार्ये उक्तं रूपं सिद्धम् । अत्र पिप्पलीशब्दस्य नियतविभक्तिकत्वेऽपि 'एकविभक्तावषष्ठयन्तवचनम्' इति निषेधादुपसर्जनत्वाद् ह्रस्वो नेति तत्त्वविदः ।

**अक्षशौण्डः ( ई० ४९ )**—अक्षेषु शौण्डः इति विग्रहे 'सप्तमी शौण्डैः' इति समासे सुब्लुकि विभक्तिकार्ये तत्सिद्धिः ।

**पौर्वशालः ( ई० ५२ )**—पूर्वस्यां शालायां भवः इति लौकिकविग्रहे 'पूर्वा ङि शाला ङि' इति स्थिते 'तद्धितार्थोत्तरपदसमाहारे च' इति समासे सुब्लुकि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति 'पूर्वा'शब्दस्य पुंवत्वे 'दिक्पूर्वपदादसंज्ञायां ञः' इति ञप्रत्यये 'यस्येति च' इत्याकारलोपे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ समुदायात् सौ विभक्तिकार्ये तत्सिद्धम् ।

**षाण्मातुरः ( ई० ४१ )**—षण्णां मातृणामपत्यमिति विग्रहे 'तद्धितार्थे-' इति समासे सुब्लुकि निष्पन्नात् षण्मातृशब्दात् 'मातुरुत्संख्यासम्भद्रपूर्वायाः' इत्यणि ऋकारस्य उत्वे रपरत्वे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ विभक्तिकार्ये 'षाण्मातुरः' इति ।

**पञ्चगवधनः ( ई० २७ )**—पञ्च गावो धनं यस्य स 'पञ्चगवधनः' । अत्र पञ्चन् जस् गो जस् धन सु' इति त्रिपदे बहुव्रीहौ अवान्तर—'पञ्चन्-गोशब्दयोः'

'तद्धितार्थे'ति विभाषया समासे प्राप्ते 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' इति नित्ये समासे सुब्लुकि अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वात् पञ्चन्-शब्दस्य नस्य लोपे 'पञ्चगो' इत्यस्मात् 'गोरतद्धितलुकि' इति टचि अनुबन्धलोपे अवादेशे 'पञ्चगव' इति बहुव्रीहाववान्तरे 'तत्पुरुषे' जाते बहुव्रीहिसमासस्यापि प्रातिपदिकत्वात् सुलोपे समुदायात् सौ रुत्वे विसर्गे 'पञ्चगवधनः' इति।

**पञ्चगवम्** ( ई० ४९, ५१ )—'पञ्चन् आम् गो आम्' इति विग्रहे 'तद्धितार्थ-' इति समासे सुब्लुकि अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नलोपे 'गोरतद्धितलुकि' इति टचि अनुबन्धलोपे अवादेशे 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञायां 'द्विगुरेकवचनम्' इत्येकवद्भावे समुदायात् सौ 'स नपुंसकम्' इति नपुंसकत्वात् सोरमि पूर्वरूपे उक्तं रूपं सिद्धम्।

**महावैयाकरणः** ( ई० ५०, ५२ )—महांश्चासौ वैयाकरणः इति विग्रहे 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति समासे सुब्लुकि 'आन्महतः-' इत्यात्वे विभक्तिकार्ये 'महावैयाकरणः' इति।

**पुरुषव्याघ्रः** ( ई० ४७ )—पुरुषो व्याघ्र इव इति विग्रहे 'उपमितं व्याघ्रादिभिः-' इति समासे सुब्लुकि विभक्तिकार्ये तत्सिद्धिः।

**चिन्मात्रम्** (ई० ५१)-चिदेव-चिन्मात्रम्। 'मयूरव्यंसकादयश्च' इत्यनेन साधुः।

**अब्राह्मणः** ( ई० ४८ )—न ब्राह्मणः इति विग्रहे 'नञ्' इत्यनेन समासे सुब्लुकि 'नलोपो नञः' इति नञो नस्य लोपे विभक्त्यादिकार्ये तत्सिद्धिः।

**अनश्वः** ( ई० ५० )—न अश्वः इति विग्रहे 'नञ्' इति सूत्रेण समासे सुब्लुकि 'नलोपो नञः' इति नलोपे 'तस्मान्नुडचि' इति नुटि अनुबन्धलोपे समुदायात् सौ रुत्वे विसर्गे तत् सिद्धम्।

**कुपुरुषः** (ई० ५०)—कुत्सितः पुरुषः इति विग्रहे 'कुगतिप्रादयः' इत्यनेन कुत्सितार्थक 'कु' इत्यव्ययस्य पुरुषशब्देन समासे सुब्लुकि विभक्तिकार्ये 'कुपुरुषः' इति।

**अतिमालः** ( ई० २४ )—मालामतिक्रान्तः अतिमालः। 'माला अम् अति' इति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासे समासशास्त्रघटकप्रथमान्तपदनिर्दिष्ट 'अती'त्यस्योपसर्जनसंज्ञायां पूर्वनिपाते सुब्लुकि 'एकविभक्तिचापूर्वनिपाते' इति नियतविभक्तिकस्योपसर्जनसंज्ञायां 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वे समुदायात् सौ रुत्वे विसर्गे 'अतिमालः' इति।

**निष्कौशाम्बिः** ( ई० ५२ )—निष्क्रान्ता कौशाम्ब्याः निष्कौशाम्बिः। अत्र 'निरादयः क्रान्ताद्यर्थे पञ्चम्याः' इति समासे सुब्लुकि 'एकविभक्तिचापूर्वनिपाते'

इति कौशाम्बीशब्दस्योपसर्जनसंज्ञायां 'गोस्त्रियोः—' इति ह्रस्वे षत्वे विभक्तिकार्ये उक्तं रूपं जातम् ।

**कुम्भकारः** ( ५०, ५३ )—कुम्भं करोतीत्यर्थे 'कर्मण्यण्' इत्यणि 'कुम्भ अस् कृ अण्' इत्यलौकिकविग्रहे 'अचोञ्णिति' इति वृद्धौ 'तत्रोपपदं सप्तमीस्थम्' इति कुम्भशब्दस्योपपदसंज्ञायाम् 'उपपदमतिङ्' इति समासे सुपो लुकि 'कुम्भकार' इति भूते समासत्वात्सौ रुत्वे विसर्गे उक्तं रूपं सिद्धम् ।

**व्याघ्री** ( ई० २६ )—विशेषेण आसमन्ताज्जिघ्रतीति विग्रहः । वि आङ्पूर्वक 'घ्रा' धातोः 'आतश्चोपसर्गे कः' इति कप्रत्यये 'आतो लोप इटि च' इत्यालोपे 'गतिश्च' इति गतिसंज्ञायां 'गतिकारकोपपदानाम्—' इति परिभाषया सुबुत्पत्तेः प्राक् घ्रशब्देन आङः 'कुगतिप्रादयः' इति समासे ततः आघ्रशब्देन वेर्गतिसमासे यणि 'व्याघ्र' इति । तस्मात् स्त्रीत्वविवक्षायां 'जातेरस्त्रीविषयादयोपधात्' इति ङीषि भत्वा-दलोपे विभक्तिकार्ये 'व्याघ्री इति ।

**अहोरात्रः** ( ई० २७ )—अहश्च रात्रिश्च अहोरात्रः, 'जातिरप्राणिनाम्' इत्ये-कवद्भावः । 'अहन् सु रात्रि सु' इति विग्रहे द्वन्द्वसमासे सुब्लुकि 'अहः सर्वैकदेश-' इत्यचि भत्वात् 'यस्येति च' इतीकारलोपे 'परवल्लिङ्गम्—' इति बाधित्वा 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे 'रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्' इति नस्य रुत्वे उत्वे गुणे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम् ।

**पूर्वरात्रः** ( ई० ४७, ५० )—रात्रेः पूर्वमिति विग्रहे 'पूर्वकालैकसर्वजरत्—' इति समासे सुब्लुकि 'अहःसर्वैकदेश—' इत्यचि भत्वात् 'यस्येति च' इतीकारलोपे 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे प्रातिपदिककार्ये 'पूर्वरात्रः' इति ।

**परमराजः** ( ई० २६ )—परमश्चासौ राजा परमराजः । 'परम सु राजन् सु' इत्यलौकिकविग्रहे 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति समासे सुब्लुकि 'राजाहः सखिभ्यष्टच्' इति टचि भसंज्ञायां 'नस्तद्धिते' इति टिलोपे विभक्तिकार्ये तत्सिद्धम् ।

**द्विनावम्**( ई० ५० )—द्वयोर्नावोः समाहारः इति विग्रहे समासे सुब्लुकि 'नावो द्विगोः' इति टचि आवादेशे विभक्तिकार्ये तत्सिद्धिः ।

**अर्धनावम्**—( ई० ४९ )—नावोऽर्धमिति विग्रहे समासे 'अर्धाच्च' इति टचि आवादेशे विभक्तिकार्ये तत्सिद्धिः ।

**महाराजः** ( ई० २४ )—महांश्चासौ राजा महाराजः । 'महत् सु राजन् सु' इत्यलौकिकविग्रहे 'सन्महत्–' इति समासे सुब्लुकि 'राजाहः सखिभ्यष्टच्' इति टचि भत्वात् 'नस्तद्धिते' इति टिलोपे 'आन्महतः समानाधिकरणजातीययोः' इत्यात्वे विभक्तिकार्ये तत्सिद्धम् ।

**अर्धपिप्पली** ( ई० २६ )—अर्धं पिप्पल्याः अर्धपिप्पली । 'अर्ध सु पिप्पली ङस्' इत्यलौकिकविग्रहे 'अर्धं नपुंसकम्' इति समासे सुब्लुकि 'परवल्लिङ्गम्—' इति समुदायस्य स्त्रीत्वे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**पञ्चकपालः** ( ई० ५२ )—'पञ्चन् सुप् कपाल सुप् इत्यलौकिकविग्रहे 'तद्धितार्थ–' इति समासे सुब्लुकि 'संस्कृतं भक्षाः' इत्यणि 'द्विगोर्लुगनपत्ये' इत्यणो लुकि कपालशब्दस्य नपुंसकत्वात् 'परवल्लिङ्गम्–' इति पञ्चकपालशब्दस्याऽपि नपुंसकत्वे प्राप्ते 'द्विगुप्राप्तापन्न–' इति तन्निषेधे विभक्तिकार्ये तत्सिद्धम् । ( पञ्चसु कपालेषु संस्कृतः–पञ्चकपालः, पुरोडाशः ) ।

**अर्धर्चः** ( ई० ४८ )—ऋचोऽर्धमिति विग्रहे 'अर्धं नपुंसकम्' इति समासे अर्धशब्दस्योपसर्जनसंज्ञायां पूर्वनिपाते सुब्लुकि 'ऋक्पूरब्धूः–' इत्यप्रत्यये गुणे रपरत्वे 'अर्धर्चाः पुंसि च' इति नपुंसकत्वे विभक्तिकार्ये 'अर्धर्चम्' इति । पुंस्त्वे तु 'अर्धर्चः' इति भवति ।

इति तत्पुरुषप्रकरणम् ।



# अथ बहुव्रीहिप्रकरणम्

**कण्ठेकालः** ( ई० ५१ )—कण्ठे कालो यस्येति विग्रहे 'सप्तमी विशेषणे बहुव्रीहौ' इति ज्ञापकात् समासे सप्तम्यन्तस्य 'कण्ठे' इत्यस्य पूर्वनिपाते च 'हलन्तात् सप्तम्याः संज्ञायाम्' इति सप्तम्याः अलुकि सुपो लुकि समुदायात् सौ रुत्वे विसर्गे च कृते तत्सिद्धिः ।

**अपुत्रः** ( ई० ४२ )—अविद्यमानपुत्रः इति विग्रहे 'नञोऽस्त्यर्थानां वाच्यो वे'ति समासे उत्तरपदलोपे विभक्तिकार्ये तत्सिद्धिः ।

**चित्रगुः** ( ई० ५० )—चित्रा गावो यस्येति लौकिकविग्रहे 'चित्रा जस् गो जस्' इत्यलौकिकविग्रहे 'अनेकमन्यपदार्थे' इति समासे सुपो लुकि 'स्त्रियाः पुंवत्–' इति 'चित्रा' शब्दस्य पुंवद्भावाट्टापो निवृत्तौ 'एकविभक्ति चापूर्वनिपाते' इति गो-

शब्दस्योपसर्जनत्वाद् 'गोस्त्रियोरुपसर्जनस्य' इति गोशब्दस्यौकारस्य ह्रस्वे समुदायात् सौ रुत्वे विसर्गे च कृते 'चित्रगुः' इति सिद्धम् ।

रूपवद्भार्यः ( ई० ५२, ५३ )—रूपवती भार्या यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुपो लुकि 'स्त्रियाः पुंवत्–' इति पुंवद्भावे ङीपो निवृत्तौ 'एकविभक्ति चापूर्वनिपाते' इत्युपसर्जनसंज्ञायां 'गोस्त्रियोः–' इति भार्याशब्दस्य ह्रस्वे विभक्तिकार्ये तत्सिद्धिः ।

कल्याणीपञ्चमाः ( ई० ४७ )—पञ्चानां पूरणीति विग्रहे 'तस्य पूरणे डट्' इति पञ्चन्शब्दात् डटि 'नान्तादसंख्यादेर्मट्' इति डटो मटि नलोपे टित्वात् ङीपि अलोपे पञ्चमीति । ततः 'कल्याणी सु पञ्चमी सु' इति विग्रहे समासे सुपो लुकि पञ्चमीशब्दस्य पूरणप्रत्ययान्तत्वेन तस्मिन् परे 'स्त्रियाः पुंवत्–' इति पुंवद्भावाऽप्राप्तौ 'अप्पूरणीप्रमाण्योः' इत्यपि भत्वात् 'यस्येति च' इतीकारलोपे विभक्तिकार्ये तत्सिद्धिः।

दृढभक्तिः ( ई० ५२ )—अत्र भक्तिशब्दस्य प्रियादिषु पाठात् दृढा भक्तिर्यस्य सः दृढभक्तिरित्यत्र कथं पुंवत्वमिति चेन्न, 'सामान्ये नपुंसकम्' इत्याश्रित्य दृढं भक्तिर्यस्येति मूले प्रतिपादितत्वात् ।

उपदशाः ( ई० ५३ )—दशानां समीपे ये सन्तीति विग्रहे समासे सुब्लुकि 'बहुव्रीहौ संख्येये डजबहुगणात्' इति समासान्तडच्प्रत्यये डित्वसामर्थ्यादभस्यापि टेर्लोपे विभक्तिकार्ये 'उपदशाः' इति ।

आसन्नविंशाः ( ई० ५२ )—विंशतेरासन्ना इत्यर्थः । अत्र आसन्नशब्दस्य विंशतिशब्देन षष्ठ्यन्तेन 'संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये' इति समासे सुब्लुकि 'बहुव्रीहौ संख्येये–' इति डचि अनुबन्धलोपे 'आसन्नविंशति अ' इति स्थिते 'टेः' इति इकारमात्रस्य लोपे प्राप्ते तम्प्रबाध्य 'ति विंशतेर्डिति' इति 'ति' शब्दस्य लोपे 'अतो गुणे' इति पररूपे विभक्तिकार्ये 'आसन्नविंशाः' इति ।

केशाकेशि ( ई० ४७, ५२ )—केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तमिति विग्रहे 'तत्र तेनेदमिति सरूपे' इति समासे सुब्लुकि 'अन्येषामपि दृश्यते' इति पूर्वपदान्तस्य दीर्घे 'इच् कर्मव्यतिहारे' इति इचि अनुबन्धलोपे 'यस्येति च' इत्यकारलोपे समुदायात् सौ इच्प्रत्ययान्तत्वेन अव्ययत्वात् सुब्लुकि 'केशाकेशि' इति

जलजाक्षी ( ई० ४०, ५२ )—जलजे इव अक्षिणी यस्या इति विग्रहे समासे सुपो लुकि 'बहुव्रीहौ सक्थ्यक्ष्णोः–' इति षचि 'जलज अक्षि अ' इति स्थिते भत्वात्

'यस्येति च' इतीलोपे सवर्णदीर्घे 'षिद्गौरादिभ्यश्च' इति ङीषि भत्वादल्लोपे विभक्तिकार्ये तत्सिद्धिः।

द्विमूर्धः ( ई० ४८ ) द्वौ मूर्धानौ यस्येति विग्रहे बहुव्रीहिसमासे सुपो लुकि 'द्वित्रिभ्यां षः मूर्ध्नः' इति षप्रत्यये भत्वात् 'नस्तद्धिते' इति टिलोपे विभक्तिकार्ये तत्सिद्धिः।

अन्तर्लोमः ( ई० ४९ )—अन्तर्लोमानि यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुपो लुकि 'अन्तर्बहिर्भ्यां च लोम्नः' इत्यपि भत्वात् टिलोपे विभक्त्यादि कार्ये तत्सिद्धिः।

द्रुणसः ( ई० ५२ )—द्रुरिव नासिका यस्येति विग्रहे समासे सुब्लुकि 'अञ्नासिकायाः संज्ञायां नसं चास्थूलात्' इत्यचि नासिकाशब्दस्य नसादेशे च कृते 'पूर्वपदात्संज्ञायामगः' इति णत्वे विभक्तिकार्ये 'द्रुणसः' इति।

विख्यः ( ई० ४१ )—विगता नासिका यस्येति विग्रहे समासे सुब्लुकि 'ख्यश्च' इति नासिकाशब्दस्य ख्यादेशे विभक्तिकार्ये 'विख्यः' इति।

युवजानिः ( ई० ५१ )—युवतिर्जाया यस्येति विग्रहे समासे सुब्लुकि 'जायाया निङ्' इति जायाशब्दे यकारादकारस्य निङि अनुबन्धलोपे 'लोपो व्योर्वलि' इति यलोपे 'स्त्रियाः पुंवत्' इति पुंवत्वात् तिप्रत्ययस्य निवृत्तौ विभक्तिकार्ये 'युवजानिः' इति।

व्यूढोरस्कः ( ई० ४८ )—व्यूढं = विशालम् , उरो यस्येति विग्रहे समासे सुब्लुकि 'उरः प्रभृतिभ्यः कप्' इति समासान्तकपि 'आद्गुणः' इति गुणे उरुसः सस्य रुत्वे विसर्गे 'सोऽपदादौ' इति विसर्गस्य सत्वे विभक्तिकार्ये 'व्यूढोरस्कः' इति।

महायशस्कः—महायशाः ( ई० ४९ )—महत् यशः यस्येति विग्रहे समासे सुब्लुकि 'आन्महतः–' इत्यात्वे 'शेषाद्विभाषा इति कपि यशः सकारस्य रुत्वे विसर्गे 'सोऽपदादौ' इति विसर्गस्य सत्वे विभक्तिकार्ये 'महायशस्कः' इति। कबभावे 'अत्वसन्तस्य–' इति दीर्घे 'महायशाः' इति।

इति बहुव्रीहिप्रकरणम्।



# अथ द्वन्द्वप्रकरणम्

**राजदन्तादिषु परम्** ( ई० ४७ )—राजदन्तादिषु पूर्वप्रयोगार्हं परं स्यादित्यर्थः। दन्तानां राजा 'राजदन्तः' इत्युदाहरणम्।

**शिवकेशवौ** ( ई० ४७, ४९, ५२ )—शिवश्च केशवश्चेति विग्रहे द्वन्द्वसमासे सुब्लुकि 'अल्पाच्तरम्' इत्यनेन शिवशब्दस्य पूर्वनिपाते विभक्तिकार्ये उक्तं रूपं सिद्धत्।

**रथिकाश्वारोहम्** ( ई० ५२ )—रथिकाश्च अश्वारोहाश्चेति विग्रहे द्वन्द्वसमासे सुब्लुकि सवर्णदीर्घे 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकवद्भावे 'स नपुंसकम्' इति नपुंसकसंज्ञायां समुदायात् सौ सोरमि पूर्वरूपे उक्तं रूपं सिद्धम्।

**गोव्याघ्रम्** ( ई० ५१ )—गावश्च व्याघ्राश्चेति विग्रहे द्वन्द्वसमासे सुब्लुकि 'येषां च विरोधः शाश्वतिकः' इत्येकवद्भावे 'स नपुंसकम्' इति नपुंसकसंज्ञायां समुदायात् सौ सोरमि पूर्वरूपे गोव्याघ्रमिति।

**गोमहिषम्** ( ई० ५२ )—गावश्च महिषश्चेति विग्रहे द्वन्द्वसमासे सुब्लुकि 'विभाषा वृक्षमृग-' इति सूत्रेण एकवद्भावे समुदायात् सौ 'स नपुंसकम्' इति नपुंसकात् सोरमि पूर्वरूपे तत्सिद्धिः। पक्षे 'गोमहिषाः' इत्यपि भवति।

**मित्रावरुणौ** ( ई० ४९, ५२, ५२ )—मित्रश्च वरुणश्चेति विग्रहे द्वन्द्वसमासे सुब्लुकि 'देवता द्वन्द्वे च' इत्यनेन उत्तरपदपरे आनङादेशे पदत्वान्नलोपे विभक्त्यादिकार्ये 'मित्रावरुणौ' इति द्विवचने रूपं सिद्धम्।

**अग्निष्टुत्** ( ई० ४२ )—अग्निः स्तूयते अत्र इति 'अग्निष्टुत्' उपपदसमासे कृते सम्पदादित्वात् अधिकरणे क्विपि। क्विपः सर्वापहारे 'ह्रस्वस्य पिति कृति तुक्' इति तुकि अनुबन्धलोपे 'अग्नेः स्तुत्स्तोमसोमाः' इति सस्य षत्वे हल्ङ्यादिना सुलोपे 'अग्निष्टुत्' इति।

**छत्रोपानहम्** ( ई० ५१ )—छत्रं च उपानहौ चेति विग्रहे समाहारद्वन्द्वे सुब्लुकि 'आद्गुणः' इति गुणे 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति हान्तत्वाट्टचि 'जातिरप्राणिनाम्' इत्येकवद्भावे समुदायात् सौ 'स नपुंसकम्' इति नपुंसकत्वात् सोरमि पूर्वरूपे उक्तं रूपं सिद्धम्।

इति द्वन्द्वप्रकरणम्



# अथ एकशेषप्रकरणम्

गार्ग्यौ—गार्ग्यश्च गार्ग्यायणश्चेति गार्ग्यौ । गर्गस्य गोत्राऽपत्यं 'गार्ग्यः' 'गर्गादिभ्यो यञ्' इति यञ् । तस्यापत्यं युवा 'गार्ग्यायणः' 'यञिञोश्च' इति फक् । अत्र गोत्रयुवप्रत्ययकृतवैरूप्यात् गोत्रप्रत्ययान्तगार्ग्यशब्दः शिष्यते इति ।

हंसौ (ई० ४२, ४९)—हंसी च हंसश्चेति हंसौ । अत्र पुंस्त्वस्त्रीत्वमात्रकृत-वैरूप्यात् 'पुमान् स्त्रिया' इत्यनेन पुंल्लिङ्गो हंसशब्दः शिष्यते ।

पितरौ—माता च पिता च इति 'पितरौ' । अत्र 'पिता मात्रा' इति सूत्रेण विभाषया पितृशब्दस्यैकशेषे प्रथमाद्विवचने औ 'ऋतो ङि—इति गुणे रपरत्वे 'पितरौ' इति ।

मातापितरौ—'पिता मात्रा' इत्येकशेषाभावपक्षे माता च पिता चेति विग्रहे द्वन्द्वसमासे सुब्लुकि 'पितुर्दशगुणामता गौरवेणातिरिच्यते' इति स्मृत्या मातुरभ्यर्हि-तत्वात् 'अभ्यर्हितं च' इति पूर्वनिपाते 'आनङ् ऋतो द्वन्द्वे' इति मातृशब्दस्य आनङादेशे अनुबन्धलोपे पदत्वान्नलोपे 'मतापितृ' शब्दाद् औ ऋतो ङि–' इति गुणे रपरत्वे 'मातापितरौ' इति ।

श्वशुरौ (ई० ४९)—श्वश्रूश्च श्वशुरश्च इति विग्रहे द्वन्द्वसमासे सुब्लुकि 'श्वशुरः श्वश्र्वा' इति श्वशुरशब्दस्यैकशेषे विभक्तिकार्ये 'श्वशुरौ' इति द्विवचने रूपं सिद्धम् । पक्षे 'श्वश्रूश्वशुरौ' इति । श्वश्र्वा अपि मातृतुल्यत्वादभ्यर्हितत्वमिति बोध्यम् ।

गाव इमाः—गौश्च गौश्च इति 'गावः' । अत्र पुंल्लिङ्गस्त्रीलिङ्गेषु गोशब्देषु सहविवक्षितेषु 'पुमान् स्त्रियाः' इत्येतद् बाधित्वा 'ग्राम्यपशुसंघेष्वतरुणेषु स्त्री' इति सूत्रेण स्त्री शिष्यते । इति एकशेषप्रकरणम्



# अथ समासान्तप्रकरणम्

अर्धर्चः (ई० २७)—ऋचोऽर्धमिति विग्रहे 'अर्धं नपुंसकम्' इति समासे समासशास्त्रघटकप्रथमान्तपदनिर्दिष्टस्य 'अर्ध' शब्दस्योपसर्जनसंज्ञायां पूर्वनिपाते 'ऋक्पूरब्धू–' इति समासान्ते अप्प्रत्यये गुणे रपरत्वे 'अर्धर्चाः पुंसि च' इति पुंस्त्वे विभक्तिकार्ये 'अर्धर्चः' इति ।

द्वीपम् (ई० २६)—द्वयोः पार्श्वयोर्गता आपः यस्मिन्निति विग्रहे समासे 'द्व्यन्त-रुपसर्गेभ्योऽप् ईत्' इति अप्प्रत्यये ईत्वे सवर्णदीर्घे विभक्तिकार्ये 'द्वीपम्' इति ।

**सखिपथः**—सख्युः पन्थाः इति विग्रहे षष्ठीसमासनिष्पन्नात् सखिपथिन् शब्दात् 'ऋक्पूरब्धूः–' इत्यप्प्रत्यये भत्वात् 'नस्तद्धिते' इति टिलोपे विभक्तिकार्ये 'सखिपथः' इति।

**प्रतीपम्** ( ई० ४० )—प्रतिकूला आपः यस्मिन्निति विग्रहे समासे सुब्लुकि 'द्व्यन्तरुपसर्गेभ्योऽप् ईत्' इत्यप्प्रत्यये ईत्वे सवर्णदीर्घे विभक्तिकार्ये 'प्रतीपम्' इति।

**सप्तगोदावरम्**—सप्तानां गोदावरीणां समाहारः इति विग्रहे 'नदीभिश्च' इत्यव्ययीभावसमासे सुब्लुकि 'संख्याया नदीगोदावरीभ्यां च' इत्यचि 'यस्येति च' इति लोपे विभक्तिकार्ये 'सप्तगोदावरम्' इति।

**गवाक्षः** (ई० २५)—गवामक्षीव इति विग्रहे समासे 'अक्ष्णोऽदर्शनात्' इत्यचि भत्वात् 'यस्येति च' इति लोपे 'अवङ्स्फोटायनस्य' इत्यवङि सवर्णदीर्घे विभक्तिकार्ये 'गवाक्षः' इति।

**अहर्दिवम्** ( ई० २६ )—अहनि च दिवा चेति विग्रहे समासे 'रोऽसुपि' इति रत्वे 'अचतुर–' इत्यचि 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**प्राध्वो रथः** ( ई० २४ )—प्रगतोऽध्वानमिति विग्रहे 'अत्यादयः–' इति समासे 'उपसर्गादध्वनः' इत्यचि भत्वात् 'नस्तद्धिते' इति टिलोपे विभक्तिकार्ये तत्सिद्धिः।

**सुराजा** (ई० २७)—सु = शोभनः राजेति विग्रहे 'कुगतिप्रादयः' इति समासे 'राजाहः सखिभ्यष्टच्' इति टचि प्राप्ते 'न पूजनात्' इति निषेधे सुराजन्शब्दात् सौ 'सर्वनामस्थाने चाऽसम्बुद्धौ' इति दीर्घे सुलोपे नलोपे 'सुराजा' इति।

**किंराजा** ( ई० २६ )—कुत्सितो राजा इति विग्रहे 'किं क्षेपे' इति समासे 'राजाहः सखिभ्यष्टच्' इति प्राप्तटचः 'किमः क्षेपे' इत्यनेन निषेधे विभक्त्यादिकार्ये 'किंराजा' इति। इति समासान्तप्रकरणम्



# अथ अलुक्समासः

**ओजसा कृतम्**—'कर्तृकरणे कृता बहुलम्' इति समासे 'ओजःसहोऽम्भस्तमसस्तृतीयायाः' इति ओजस्शब्दात् तृतीयायाः अलुकि उक्तं रूपं सिद्धम्।

**आत्मनेपदम्**—आत्मार्थमित्यर्थः। 'तादर्थ्ये चतुर्थी' इति चतुर्थी योगविभागात् समासः। 'वैयाकरणाख्यायां चतुर्थ्याः' इति चतुर्थ्याः अलुक्।

**परस्मैपदम्** ( ई० २७ )—अत्र 'परस्य च' इत्यनेन वैयाकरणाख्यायां परशब्दादपि चतुर्थ्याः अलुक्।

**युधिष्ठिरः** ( ई० २८ )—अत्र 'संज्ञायाम्' इति सप्तमीसमासे कृते 'हलन्तात्-सप्तम्याः संज्ञायाम्' इति सप्तम्याः अलुकि 'गवियुधिभ्यां स्थिरः' इति स्थिरस्य सस्य षत्वे ष्टुत्वे विभक्तिकार्ये 'युधिष्ठिरः' इति ।

**ग्रामेवासी** (ई० ४१)—अत्र 'शयवासवासिष्वकालात्' इति सप्तम्याः अलुक् ।

**पश्यतो हरः**—पश्यन्तमनादृत्य हरतीति 'पश्यतो हरः' स्वर्णकारादिः । अत्र 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' इति वार्तिकेन षष्ठ्याः अलुक् ।

**मातुःष्वसा** ( ई० ५२ )—अत्र 'विभाषा स्वसृपत्योः' इत्यनेन ऋदन्तात् मातृशब्दात् परस्य षष्ठ्याः अलुकि 'मातुर्पितुभ्यामन्यतरस्याम्' इत्यनेन स्वसुः सस्य षत्वे अनङादिकार्ये 'मातुः ष्वसा' इति । षत्वाऽभावे 'मातुःस्वसा' इति लुगभावपक्षे 'मातृपितृभ्यां स्वसा' इति सूत्रेण स्वसुः सस्य षत्वे 'मातृष्वसा' इति ।

इति अलुक्समासः ।



# अथ समासाश्रयप्रकरणम्

**ब्राह्मणिचेली** ( ई० २७ )—अत्र चेलट्प्रत्ययपरे 'घरूपकल्पचेलड्—' इति सूत्रेण ह्रस्वे टित्वात् ङीप् ।

**विद्वत्तरा** ( ई० २५ )—अत्र 'उगितश्च' इति तरप्प्रत्ययपरे ह्रस्वे 'विदुषितरा' इति। ह्रस्वाभावपक्षे 'तसिलादिष्वाकृत्वसुचः' इति पुंवत्वे ङीपो निवृत्तौ 'विद्वत्तरा' इति।

**पदातिः** ( ई० २४ )—पादाभ्यामतीति 'पदातिः' । अत्र 'पादस्य पदाज्यातिगोपहतेषु' इति पादशब्दस्य पदादेशे विभक्तिकार्ये 'पदातिः' इति ।

**उदपेषं पिनष्टि** (ई० २६)—उदकेन पिनष्टीत्यर्थः । अत्र 'पेषंवासवाहनाधिषु च' इत्यनेन उदकस्य उदादेशः ।

**कौमुदगन्धीपुत्रः** (ई० २६)—कुमुदगन्धेरपत्यं स्त्री 'कौमुदगन्ध्या' तस्याः पुत्रः इति विग्रहे समासे सति 'ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे' इति 'ष्यङः सम्प्रसारणेन यकारस्य इकारे पूर्वरूपे 'सम्प्रसारणस्य' इति दीर्घे विभक्तिकार्ये उक्तरूपं सिद्धम्।

**सतीर्थ्यः** ( ई० २७ )—समाने तीर्थे वसतीति 'सतीर्थ्यः' तीर्थ=गुरुः । अत्र 'तीर्थे ये' इत्यनेन समानस्य सादेशः ।

**ईदृक्** ( ई० २५ )—इदमिव दृश्यते 'ईदृक्' अत्र 'इदं किमोरीश्की' इत्यनेन इदमः ईशा देशे 'ईदृक्' इति ।

**कत्तृणम्** ( ई० ५२ )—कुत्सितं तृणम् 'कत्तृणम्'। 'तृणे च जातौ' इत्यनेनात्र तृणशब्दे उत्तरपदे कोः कदादेशः।

**बलाहकः** ( ई० २६ )—वारिवाहको-बलाहकः। अत्र 'पृषोदरादीनि यथोपदिष्टम्' इत्यनेन पूर्वपदस्य बः उत्तरपदादेश्च लत्वम्।

**भवेद्वर्णागमाद्धंसः** (ई० २७)—'हसे हसने' इत्यतः पचाद्यचि-वर्णागमात् = अनुस्वारागमात् 'हंसः' इति भवेत्=सिद्ध्यति। एवं 'हिसि हिंसायाम्' इत्यतः पचाद्यचि नुमि अनुस्वारे सकारहकारयोर्विपर्यये च 'सिंहः' इति रूपम्। एवं गूढ आत्मा यस्येति विग्रहे वर्णविकृतेः = आत्माऽऽकारस्य उकारादेशात् गुणे च 'गूढोत्मा' इति रूपं सिद्ध्यति। एवं वर्णनाशात् = तकारलोपात् 'पृषोदरम्' इति रूपं सिद्ध्येतीति शेषः।

**विश्वामित्रः** ( ई० २५ )—विश्वस्य मित्रः इति विग्रहः। अत्र 'मित्रे चर्षौ' इत्यनेन विश्वशब्दस्य दीर्घः।

**तस्करः** (ई० २८)—तद् करोतीति-'तस्करः' चोरः। अत्र 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' इति वार्तिकेन दलोपः सुट् च।

**बृहस्पतिः**—बृहत्याः ( वाचः ) पतिः-'बृहस्पतिः'। अत्र 'तद्बृहतोः-' इति वार्तिकेन तलोपः सुट् च भवति।

**प्रायश्चित्तम्** (ई० २९)—प्रायस्य चित्तम्-प्रायश्चित्तम्। अत्र 'प्रायस्य चित्तिचित्तयोः' इति गणसूत्रेण सुट्। 'प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम्' इति स्मृतिः। इति समासाश्रयप्रकरणम्।



# अथ तद्धिताः

## तत्रादौ साधारणप्रत्ययप्रकरणम्।

**दैत्यः** ( ई० ४८ )—दितेरपत्यमिति विग्रहे दितिशब्दात् 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यप्रत्यये आदिवृद्धौ इलोपे विभक्तिकार्ये तत्सिद्धिः (१)।

**आदित्यः** ( ई० ५२ )—अदितेरपत्यमिति विग्रहे अदितिशब्दात 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यप्रत्यये आदिवृद्धौ इलोपे विभक्तिकार्ये तत्सिद्धिः।

---

( १ ) सुबन्तात्तद्धितोत्पत्तिरिति पक्षे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सुब्लुग्भवति। प्रातिपदिकात् तद्धितोत्पत्तिरिति पक्षे तु न सुब्लुक आवश्यकतेति सर्वत्र बोध्यम्।

यद्वा आदित्यस्यापत्यमिति विग्रहे आदित्यशब्दात् ण्यप्रत्यये आदिवृद्धौ 'यस्येति चे'त्यलोपे 'हलो यमां यमि लोपः' इति यलोपे विभक्तिकार्ये तत्सिद्धिः ।

**गव्यम्** ( ई० ५३ )—गोरपत्यादि गव्यम् । 'गोरजादिप्रसङ्गे यत्' इति गोशब्दात् यति 'वान्तो यि–' इति वान्तादेशे विभक्तिकार्ये 'गव्यम्' इति ।

**बाह्लीकः**—( ई० ४५, ४७ )—बहिर्भवः इति विग्रहे बहिष्शब्दात् 'ईकक् च' इति ईकक्प्रत्यये टिलोपे 'किति चे'त्यादिवृद्धौ विभक्तिकार्ये तत्सिद्धिः ।

**औत्सः** ( ई० ४५, ४७, ४९ )—उत्सस्यापत्यादीति विग्रहे 'उत्सादिभ्योऽञ्' इत्यञि आदिवृद्धौ विभक्तिकार्ये तत्सिद्धिः ।

इति साधारणप्रत्ययप्रकरणम् ।



# अथ अपत्याधिकारप्रकरणम्

**स्त्रैणः** ( ई० ४२, ४६ )—स्त्रीषु आसक्तः, स्त्रीषु भवः, स्त्रीणां समूहः, स्त्रिया अपत्यम्, इत्याद्यर्थे 'स्त्रीपुंसाभ्याम्–' इति नञ्प्रत्यये अनुबन्धलोपे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ णत्वे विभक्तिकार्ये तत्सिद्धिः ।

**औपगवः** ( ई० ४८ )—उपगोरपत्यमिति विग्रहे उपगुशब्दात् 'तस्यापत्यम्' इत्यणि अनुबन्धलोपे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'औपगु अ' इति स्थिते 'अचो ञ्णिति' इति वृद्धिं बाधित्वा 'ओर्गुणः' इति गुणे अवादेशे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सौ सस्य रुत्वे विसर्गे 'औपगवः' इति। उपगोर्गोत्रापत्यमिति विग्रहे तु उपगुशब्दादणि निष्पन्नाद् 'औपगव' शब्दात् 'अत इञ्' इति इञि प्राप्ते 'एको गोत्रे' इति सूत्रनियमात् उपगुशब्दादणेव, कृते अणन्तात्तस्मात् पुनरिञपीति बोध्यम् ।

**गार्ग्यः** ( ई० ४५, ४७, ४९ )—गर्गस्य गोत्रापत्यमिति विग्रहे गर्गशब्दात् 'गर्गादिभ्यो यञ्' इति यञि आदिवृद्धौ भत्वात् 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'गार्ग्यः' इति । बहुत्वे तु गर्गस्य गोत्रापत्यानि इति विग्रहे यञि आदिवृद्धौ 'यञञोश्च' इति यञो लुकि 'निमित्ताऽपाये नैमित्तिकस्याप्यपायः' इति परिभाषया यञ्निमित्तवृद्ध्यभावे विभक्तिकार्ये 'गर्गाः' इति ।

**वात्स्यः** ( ई० ५१ )—वत्सस्यापत्यमिति विग्रहे 'गर्गादिभ्यो यञ्' इति यञि आदिवृद्धौ अलोपे विभक्तिकार्ये तत्सिद्धिः ।

गार्ग्यायणः ( ई० २६ )—गर्गस्य गोत्रापत्यं 'गार्ग्यः, गार्ग्यस्य अपत्यं गर्गस्य युवापत्यं गार्ग्यायणः । अत्र 'जीवति तु वंश्ये युवा' इति युवसंज्ञायायां 'यञिञोश्च' इति यञन्तात् फकि 'आयनेयीनीयियः—' इति फस्य आयन्नादेशे भत्वात् 'यस्येति च' इत्यलोपे णत्वे विभक्तिकार्ये 'गार्ग्यायणः' इति ।

दाक्षिः ( ई० ४५, ४७ )—दक्षस्यापत्यमिति विग्रहे 'अत इञ्' इति इञि आदि वृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः ।

बाहविः ( ई० ४१, ४८ )—बाहोरपत्यमिति विग्रहे 'बाह्वादिभ्यश्च' इति इञि 'ओर्गुणः' इति गुणेऽवादेशे विभक्तिकार्यम् ।

वासिष्ठः ( ई० ५० )—वशिष्ठस्यापत्यमिति विग्रहे 'ऋष्यन्धक—' इति अणि वृद्धौ स्वाद्युत्पत्तिः ।

द्वैमातुरः ( ई० ५२ )—द्वयोर्मात्रोरपत्यमिति विग्रहे 'तद्धितार्थे'ति समासे सुब्लुकि 'मातुरुत्संख्यासंभद्रपूर्वायाः' इति द्विमातृशब्दादणि ऋकारस्य उदादेशे रपरत्वे आदिवृद्धौ विभक्तिकार्ये तत्सिद्धिः ।

षाण्मातुरः ( ई० ४९ )—षण्णां मातृणामपत्यमिति विग्रहे 'तद्धितार्थे'ति समासे सुब्लुकि षस्य जश्त्वेन डकारे तस्य 'यरोऽनुनासिके—' इति णत्वे षण्मातृ-शब्दात् 'मातुरुत्संख्ये'ति अणि उत्वे रपरत्वे आदिवृद्धौ विभक्तिकार्ये तत्सिद्धिः ।

वैनतेयः—विनता नाम गरुडमाता, तस्याः अपत्यमिति विग्रहे 'स्त्रीभ्यो ढक्' इति ढकि 'आयनेयी' इति ढस्य एयादेशे भत्वात् 'यस्येति च' इत्याकारलोपे 'किति च' इत्यादिवृद्धौ विभक्तिकार्ये तत्सिद्धिः ।

राजन्यः ( ई० ५३ )—क्षत्रियात् क्षत्रियायां स्वभार्यायामुत्पन्नो राजन्यः । अत्र 'राजश्वशुराद्यत्' इत्यनेन राजन्शब्दात् जातौ यप्रत्यये 'ये चाभावकर्मणोः' इति प्रकृतिभावाट्टिलोपाऽभावे विभक्तिकार्ये 'राजन्यः' इति । जातिमात्राऽभावे तु राज्ञोऽपत्यमिति विग्रहे 'तस्याऽपत्यम्' इत्यणि 'अन्' इति प्रकृतिभावे विभक्तिकार्ये 'राजनः' इति ।

अत्रयः ( ई० ४० )—अत्रेः अपत्यानि पुमांसः इति विग्रहे 'इतश्चानिञः' इति ढकि 'अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च' इति लुकि तद्धितान्तात्प्रातिपदिक-संज्ञायां जसि गुणे अयादेशे 'अत्रयः' इति ।

गौधेरः ( ई० ५१ )—गोधाया अपत्यमिति विग्रहे 'गोधाया ढ्रक्' इति ढ्रकि ढस्य एयादेशे 'लोपो व्योर्वलि' इति यलोपे 'यस्येति च' इत्याकारलोपे कित्वा-

दादिवृद्धौ विभक्तिकार्ये 'गौधेरः' इति। पक्षे 'शुभ्रादिभ्यश्च' इति ढकि 'गौधेयः' इति।

भ्रातृव्यः ( ई० ४५ )—भ्रातुरपत्यमिति विग्रहे 'भ्रातुर्व्यच्च' इति व्यत्प्रत्यये विभक्तिकार्ये 'भ्रातृव्यः' इति। छे तु छस्य ईयादेशे 'भ्रात्रीयः' इति।

मागधः—( ई० ४१, ५२ )—मगधस्यापत्यमित्यर्थे 'द्व्यञ्मगधकलिङ्गसूरमसादण्' इति अणि वृद्धौ विभक्तिकार्ये 'मागधः' इति।

कौशल्यः ( ई० ५१ )—कोशलस्यापत्यं राजा वेति विग्रहे 'वृद्धेत्कोशलाऽजादाञ्ञ्यङ्' इति सूत्रेण ञ्यङि वृद्धौ स्वादिकार्ये 'कौशल्यः' इति।

कौरव्यः ( ई० ५०, ५२ )—कुरोरपत्यं कुरूणां राजेति वा विग्रहे 'कुरुनादिभ्यो ण्यः' इति ण्यप्रत्यये वृद्धौ विभक्तिकार्ये 'कौरव्यः' इति।

इति अपत्याधिकारः।

# अथ रक्ताद्यर्थप्रकरणम्

वामदेव्यम् ( ई० ४९ )—वामदेवेन दृष्टं साम 'वामदेव्यम्'। वामदेवशब्दात् 'वामदेवाड्ड्यड्ड्यौ' इति ड्यत्प्रत्यये डित्वाट्टिलोपे विभक्तिकार्ये 'वामदेव्यम्' इति।

मातुलः ( ई० ४६, ५२ )—मातुर्भ्राता मातुलः। 'मातुर्डुलच्' इति डुलचि विभक्तिकार्ये 'मातुलः' इति।

यौवनम्( ई. २७ )—युवतीनां समूहः इति विग्रहे 'यूनस्तिः' इति तिप्रत्ययनिष्पन्नात् 'भिक्षादिभ्योऽण्' इत्यणि आदिवृद्धौ 'भस्याढे—' इति पुंवद्भावात् तिप्रत्ययनिवृत्तौ 'अत्' इति प्रकृतिभावात् टिलोपाभावे विभक्तिकार्ये 'यौवनम्' इति।

यौवतम् ( ई० ४२ )—युवतीनां विकारः अवयवो वा 'यौवतम्'। युधातोः शतृप्रत्यये उवङि 'उगितश्च' ति ङीपि 'युवती' इति। तस्मात् 'अनुदात्तादेश्च' इत्यञि आदिवृद्धौ 'भस्याढे—' इति पुंवद्भावे ङीपो निवृत्तौ विभक्तिकार्ये 'यौवतम्' इति।

कैदार्यम् ( ई० ५१ )—केदाराणां समूहः इति विग्रहे 'केदाराद्यञ्च' इति यञि वृद्धौ 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'कैदार्यम्' इति। वुञ्पक्षे अकादेशे 'कैदारकम्' इति।

जनता—जनानां समूहः इति विग्रहे 'ग्रामजनबन्धुभ्यस्तल्' इति तलि 'तलन्तं स्त्रियाम्' इति स्त्रीत्वाट्टापि विभक्तिकार्ये 'जनता' इति।

अहीनः ( ई० ४० )—अहन्शब्दात् समूहेऽर्थे 'अह्नः खः क्रतौ' इति खप्रत्यये 'आयनेयीनीयियः—' इति खस्य ईनादेशे 'अह्नष्टखोरेव' इति टिलोपे विभक्तिकार्ये 'अहीनः' क्रतुः इति शेषः।

वात्या ( ई० ५३ )—वातानां समूहः इति विग्रहे 'पाशादिभ्यो यः' इति यप्रत्यये 'यस्येति च' इत्यलोपे स्त्रीत्वाट्टापि विभक्तिकार्ये 'वात्या' इति।

वैयाकरणः ( ई० ४८ )—व्याकरणमधीते, वेत्ति वेति विग्रहे 'तदधीते तद्वेद' इत्यणि 'यस्येति च' इत्यलोपे 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' इति यकारात्पूर्वमैजागमे विभक्तिकार्ये 'वैयाकरणः' इति।

शिक्षकः ( ई० ४५ ) शिक्षामधीते वेत्ति वेति विग्रहे शिक्षाशब्दात् 'क्रमादिभ्यो वुन्' इति वुनि अकादेशे 'यस्येति च' इत्यालोपे विभक्तिकार्ये 'शिक्षकः' इति। ( एवं मीमांसामधीते वेद वेति विग्रहे 'मीमांसकः' ) इति।

नैयायिकः ( ई० ४५ )—न्यायमधीते वेद वेति विग्रहे 'क्रतूक्थादिसूत्रान्ताट्ठक्' इति ठकि ठस्य इकि 'नय्वाभ्याम्—इति यकारात् पूर्वमैजागमे 'यस्येति च' इति अलोपे विभक्तिकार्ये 'नैयायिकः' इति।

इति रक्ताद्यर्थप्रकरणम्।



# अथ चातुरर्थिकप्रकरणम्

**औदुम्बरो देशः**—उदुम्बराः सन्त्यस्मिन् देशे इति औदुम्बरो देशः। उदुम्बरशब्दात् 'तदस्मिन्नस्तीति देशे तन्नाम्नि' इत्यणि आदिवृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

**कौशाम्बी**—कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी। कुशाम्बशब्दात् 'तेन निर्वृत्तम्' इत्यणि आदिवृद्धौ भत्वादलोपे अणन्तत्वात्तु ङीपि विभक्तिकार्ये 'कौशाम्बी नगरी' इति।

**वैदिशम्** ( ई० ५२ )—विदिशाया अदूरभवं नगरं 'वैदिशम्'। 'अदूरभवश्च' इत्यणि आदिवृद्धौ 'यस्येति च' इत्यालोपे विभक्तिकार्ये 'वैदिशम्' इति।

**शार्करम्** ( ई० ४९ )—शर्कराः सन्त्यस्मिन्, शर्कराभिः निर्वृत्तमिति वा विग्रहे शर्कराशब्दात् 'शर्कराया वा' इति वाग्रहणात् पक्षे अणि तेनैव तस्य लुकि 'लुपि युक्तवद्व्यक्तिवचने' इति युक्तिवद्भावे विभक्तिकार्ये 'शर्करा' इति। लुपः पाक्षिकत्वात्

तदभावे अणि वृद्धौ 'यस्येति च' इत्यालोपे 'शार्करम्' इति। अणभावपक्षे 'ठक्छौ च' इति ठकि ठस्य इकि 'किति च' इत्यादिवृद्धौ 'यस्येति च' इत्यालोपे विभक्तिकार्ये 'शार्करिकम्' इति। तेनैव सूत्रेण छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्यालोपे विभक्तिकार्ये 'शर्करीयम्' इति। शर्कराशब्दस्य कुमुदादिषु पाठात् 'बुञ्छण्कठ-' इति सूत्रेण ठकि ठस्य इकादेशे 'यस्येति च' इत्यालोपे विभक्तिकार्ये 'शार्करिकम्' इति। वराहादिषु पाठात् 'बुञ्छण्कठ-' इति सूत्रेण ठकि कित्वादादिवृद्धौ 'यस्येति च' इत्यालोपे विभक्तिकार्ये 'शार्करम्' इति।

कुमुद्वान् ( ई० ४१ )—कुमुदानि सन्त्यस्मिन् देशे-कुमुद्वान्, देशः। कुमुदशब्दात् 'कुमुदनडवेतसेभ्यो ड्मतुप्' इति सूत्रेण ड्मतुप्प्रत्यये 'झयः' इति मतुपोर्मस्य वत्वे 'यस्येति च' इत्यालोपे नुमि संयोगान्तलोपे दीर्घे सुलोपे 'कुमुद्वान्' इति।

शाद्वलः ( ई० ५०, ५२ )—शादाः सन्त्यस्मिन् इति विग्रहे 'नडशादाड्ड्वलच्' इति शादशब्दात् ड्वलचि डित्वादलोपे विभक्तिकार्ये 'शाद्वलः' इति 'शादो जाम्बालघासयोः' इत्यमरः।

शिखावलः ( ई० ४८ )—शिखाः सन्त्यस्मिन् इति शिखावलो देशः। 'शिखाया वलच्' इति शिखाशब्दात् वलचि विभक्तिकार्ये 'शिखावलः' (मयूरः) इति।

उत्करीयः ( ई० ५१ )—उत्कराः सन्त्यस्मिन् इति विग्रहे उत्कराशब्दात् 'उत्करादिभ्यश्छः' इति छप्रत्यये छस्य ईयादेशे भत्वादलोपे विभक्तिकार्ये 'उत्करीयः इति।

इति चातुरर्थिकप्रकरणम्।

# अथ शैषिकप्रकरणम्

राष्ट्रियः ( ई० ३० )—राष्ट्रे जातः, भवः इत्यादिविग्रहे 'राष्ट्राऽवारपाराद्घखौ' इति घप्रत्यये 'आयनेयीनीय-' इति सूत्रेण घस्य इयादेशे भत्वात् 'यस्येति च' इति टिलोपे विभक्तिकार्ये 'राष्ट्रियः' इति।

पारावारीणः—'राष्ट्राऽवारपाराद्घखौ' इति सूत्रस्थ 'अवारपाराद्विगृहीतादपि, विपरीताच्चेति वक्तव्यम्' इति वार्तिकस्याऽयमर्थः-' विगृहीतात् = पृथग्भूतात्, अवारशब्दात्, पारशब्दात्, च = पुनः, विपरीतात् = पारावारशब्दादपि खप्रत्ययो वक्तव्यः, इति। ततश्च—अवारे जातः 'अवारीणः' पारे जातः 'पारीणः' पारावारे

जातः 'पारावारीणः' इति रूपत्रयं सिद्धं भवति । अत्र 'आयनेय–' इति सूत्रेण खस्य ईनादेशः 'यस्येति च' इति टिलोपः नस्य णत्वमिति विशेषः । 'अवारपारीणः' इति तु चतुर्थं रूपं बोध्यम् ।

ग्रामीणः, ग्राम्यः—ग्रामे जातादिरिति विग्रहे ग्रामशब्दात् 'ग्रामाद्यखञौ' इति खञि 'आयनेय–' इति खस्य ईनादेशे 'यस्येति च' इति टिलोपे णत्वे विभक्तिकार्ये 'ग्रामीणः' इति । यप्रत्यये तु 'ग्राम्यः' इति ।

पौरस्त्यः ( ई० ५० )—पुरसि जातादिरिति विग्रहे 'दक्षिणापश्चात्पुरसस्त्यक्' इति त्यकि 'किति च' इति वृद्धौ विभक्तिकार्ये 'पौरस्त्यः' इति ।

शालीयः—शालायां भवादिरिति विग्रहे 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' इति शालाशब्दस्य वृद्धिसंज्ञायाम् 'वृद्धाच्छः' इति छप्रत्यये 'आयनेयी–' इति छस्य ईयादेशे 'यस्येति च' इति टिलोपे विभक्तिकार्ये 'शालीयः' इति ।

यौष्माकीणः ( ई० ५१ )—युवयोः युष्माकं वाऽयमिति विग्रहे 'युष्मदस्मदोरन्यतरस्यां खञ् च' इति युष्मच्छब्दात् खञि खस्य ईयादेशे 'तस्मिन्नणि च युष्माकास्माकौ' इति युष्माकादेशे 'यस्येति च' इति टिलोपे आदिवृद्धौ णत्वे विभक्तिकार्ये 'यौष्माकीणः' इति ।

मामकीनः ( ई० ५१ )—मम अयमिति विग्रहे 'युष्मदस्मदोरन्यतरस्यां खञ् च' इति खञि खस्य ईनादेशे 'तवकममकावेकवचने' इति अस्मच्छब्दस्य ममकादेशे आदिवृद्धौ 'यस्येति च' इति टिलोपे विभक्तिकार्ये 'मामकीनः' इति ।

त्वदीयः—तव अयमिति विग्रहे युष्मच्छब्दात् 'युष्मदस्मदोः' इति चकाराच्छप्रत्यये छस्य ईयादेशे 'प्रत्ययोत्तरपदयोश्च' इति युष्मदो मपर्यन्तस्य त्वादेशे 'त्व अद् ईय' इति जाते 'अतो गुणे' इति पररूपे विभक्तिकार्ये तत्सिद्धिः ।

आधिदैविकम् ( ई० ५२ )—देवेष्वित्यधिदेवम्, अधिदेवे भवमाधिदैविकम् । अधिदेवशब्दात् 'अध्यात्मादेष्ठञिष्यते' इति वार्तिकेन ठञि ठस्येकादेशे 'अनुशतिकादीनां च' इत्युभयपदवृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः ।

शौवस्तिकम् ( ई० ५० )—श्वस् इत्यव्ययाम् जाताद्यर्थे 'श्वसस्तुट् च' इति ठञि ठस्य इकादेशे तुडागमे 'द्वारादीनां च' इति वृद्धिं प्रबाध्य वकात्पूर्वमैजागमेन औकारे विभक्तिकार्ये 'शौवस्तिकम्' इति ।

भावत्कः ( ई० ५२ )—भवतामयं भावत्कः–भवदीयः । 'त्यदादीनि च' इति वृद्धिसंज्ञकात् डवतुप्रत्ययान्तात् भवत्शब्दात् 'भवतष्ठक्छसौ' इति ठकि 'इसुसुक्ता-

न्तात् कः' इति ठस्य कादेशे 'किति च' इति आदिवृद्धौ विभक्तिकार्ये 'भावत्कः' इति। छप्रत्यये तु छस्य ईयादेशे तस्य जश्त्वे 'भवदीयः' इति।

**ग्रैष्मम्** ( ई० ४४, ४७ )—ग्रीष्मे भवमिति विग्रहे 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यणि वृद्धौ विभक्तिकार्ये 'ग्रैष्मम्' इति।

**प्रावृषेण्यः** ( ई० ४८ )—प्रावृषि भवः इति विग्रहे 'प्रावृष एण्यः' इति प्रावृष्शब्दाद् एण्यप्रत्यये भत्वादलोपे विभक्तिकार्ये 'प्रावृषेण्यः' इति।

**प्रावृषिकः** ( ई० ४९ )—प्रावृषि जातः इति विग्रहे 'प्रावृषेण्यः' इति सूत्रं प्रबाध्य 'प्रावृषष्ठप्' इति ठपि ठस्य इकादेशे विभक्तिकार्ये 'प्रावृषिकः' इति।

**हैमवती** ( ई० ४२ )—हिमवतः प्रभवति इति विग्रहे 'प्रभवति' इति अणि वृद्धौ अणन्तत्वाद् ङीपि विभक्तिकार्ये 'हैमवती, गङ्गा' इति।

**शारीरकीयः** ( ई० ५३ )—शरीरस्याऽयं शारीरः, ( भवार्थे अण् ), शारीर एव शारीरकः ( स्वार्थे कः ) तमधिकृत्य कृतो ग्रन्थः शारीरकीयः। 'अधिकृत्य कृते ग्रन्थे' इति सूत्रेण शारीरकशब्दात् छप्रत्यये छस्य ईयादेशे भत्वादलोपे विभक्तिकार्ये 'शारीरकीयः' इति।

**हालिकम्** ( ई० ५१ )—हलस्य इदमिति विग्रहे 'हलसीराठ्ठक्' इति ठकि 'किति च' इति वृद्धौ ठस्य इकादेशे भत्वादलोपे विभक्तिकार्ये 'हालिकम्' इति।

इति शैषिकप्रकरणम्।



# अथ विकारार्थप्रकरणम्

**कापित्थम्** ( ई० ५० )—कपौ तिष्ठतीति कपित्थः, तस्य विकारः अवयवो वेति विग्रहे 'अनुदात्तादेश्च' इति अञि वृद्धौ स्वाद्युत्पत्तिः।

**आश्मनम्** ( ई० २४ )—कल्माषांघ्रिर्नाम कश्चित् राजा, तत्पत्न्यां वशिष्ठेनोत्पादितः 'अश्मकः' इति शास्त्रे प्रसिद्धः। तस्मात् अश्मन् शब्दात् स्वार्थे कप्रत्ययः। तदभावे अश्मेत्यपि नाम। तस्य विकारो अवयवो वेत्यर्थे 'अश्मन्' शब्दात् 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' इति मयटि नलोपे विभक्तिकार्ये 'अश्ममयम्' इति। मयडभावे 'तस्य विकारः' इत्यणि 'अन्' इति प्रकृतिभावाट्टिलोपाऽभावे आदिवृद्धौ विभक्तिकार्ये 'आश्मनम्' इति। नच विकारार्थकत्वे 'अश्मनो विकारे टिलोपो वक्तव्यः' इति वार्तिकेन टिलोपः कुतो नेति वाच्यम्, पाषा-

णवाचकत्वेन प्रसिद्धस्याश्मन्शब्दस्यैव तत्र ग्रहणात्। (पाषाणवाचकाद् अश्मन् शब्दात्तु विकारार्थे अणि टिलोपे आदिवृद्धौ विभक्तिकार्ये 'आश्मः' इति भवति)।

**आम्रमयम्** (ई० ५१)—आम्रस्य विकारोऽवयवो वेत्यर्थे 'नित्यं वृद्धिशरादिभ्यः' इति आम्रशब्दात् मयटि विभक्तिकार्ये 'आम्रमयम्' इति।

**ऐणेयम्** (ई० ५२)—एण्या अवयवो विकारो वेति विग्रहे 'एण्या ढञ्' इति ढञि ढस्य 'आयनेय–' इति एयादेशे 'यस्येति च' इति ईकारलोपे विभक्तिकार्ये 'ऐणेयम्' इति।

**गव्यम्** (ई० ४८)—गोर्विकारोऽवयवो वेत्यर्थे 'गोपयसोर्यत्' इति गोशब्दात् यत्प्रत्यये 'वान्तोऽयि–' इत्यवादेशे विभक्तिकार्ये 'गव्यम्' इति।

**आमलकम्** (ई० ५३)—आमलक्याः फलमिति विग्रहे मयटि 'फले लुक्' इति तस्य लुकि 'लुक्तद्धितलुकि' इति ङीषो लुकि विभक्तिकार्ये 'आमलकम्' इति।

इति विकार्यप्रकरणम्।



# अथ ठगधिकरप्रकरणम्

**मारीचिकम्**—मरीचेन संस्कृतमिति विग्रहे 'संस्कृतम्' इति ठकि ठस्य इकादेशे 'किति च' इत्यादिवृद्धौ 'यस्येति च' इत्यलोपे 'मारीचिकम्' इति।

**शाब्दिकः** (ई० ४९)—शब्दं करोतीति विग्रहे 'शब्ददर्दुरं करोति' इति ठकि ठस्येकादेशे 'किति चे'ति वृद्धौ विभक्तिकार्ये 'शाब्दिकः' इति। प्रकृतिप्रत्ययविभागेन शब्दं व्युत्पादयतीत्यर्थः।

**लावणिकः** (ई० ४४, ४८, ५०)—लवणम् (पण्यम्) अस्येति विग्रहे 'लवणाट्ठञ्' इति ठञि ठस्येकादेशे 'किति चे'ति वृद्धौ भत्वादलोपे विभक्तिकार्ये 'लावणिकः' इति।

**शाक्तीकः** (ई० ५१)—शक्तिरस्ति अस्येति विग्रहे 'शक्तियष्ट्योरीकक्' इति प्रथमान्तात् शक्तिशब्दात् ईकक्प्रत्यये 'किति चे'ति वृद्धौ सवर्णदीर्घे विभक्तिकार्ये 'शाक्तीकः' इति।

**आस्तिकः** (ई० ४०)—अस्ति परलोकः, इत्येवं मतिर्यस्येति विग्रहे 'अस्ति–नास्ति–दिष्टं मतिः' इति ठकि ठस्य इकादेशे 'किति च' इति वृद्धौ विभक्तिकार्ये 'आस्तिकः' इति।

छात्त्रः ( ई० ४२ )—गुरोर्दोषाणामावरणं छत्त्रं, तच्छीलमस्येति विग्रहे 'छत्त्रादिभ्यो णः' इति प्रथमान्तात् छत्त्रशब्दात् णप्रत्यये वृद्धौ विभक्तिकार्ये 'छात्त्रः' इति ।

इति ठगधिकारप्रकरणम् ।



# अथ प्राग्घितीय ( यदधिकार ) प्रकरणम्

युग्यः—युगं वहतीति विग्रहे 'तद्वहतिरथयुगप्रासंगम्' इति युगशब्दात् यत्प्रत्यये भत्वादलोपे विभक्तिकार्ये 'युग्यः' इति ।

धौरेयः—धुरं वहतीत्यर्थे 'धुरो यड्ढकौ' इति धुर्शब्दात् ढकि ढस्य एयादेशे 'किति च' इति वृद्धौ विभक्तिकार्ये 'धौरेयः' इति ।

नाव्यम्—नावा तार्यमिति विग्रहे 'नौवयोधर्म-' इति सूत्रेण नौशब्दात् यत्प्रत्यये 'वान्तो यि-' इत्यवादेशे विभक्तिकार्ये 'नाव्यम्' इति ।

मूल्यः ( ई० ५३ )—मूलेन समः इति विग्रहे 'नौवयोधर्मविषमूल-' इति सूत्रेण मूलशब्दात् यति भत्वादलोपे विभक्तिकार्ये 'मूल्यः' इति ।

शरण्यः—शरणे साधुरिति विग्रहे 'तत्र साधुः' इति शरणशब्दात् यत्प्रत्यये भत्वादलोपे विभक्तिकार्ये 'शरण्यः' इति ।

सभ्यः ( ई० ४० )—सभायां साधुरिति विग्रहे 'सभाया यः' इति सभाशब्दात् यप्रत्यये भत्वात् 'यस्येति च' इत्यालोपे विभक्तिकार्ये 'सभ्यः' इति ।

इति प्राग्घितीयप्रकरणम् ।



# अथ छतयोराधिकारप्रकरणम्

नभ्यम्—नाभये हितमिति विग्रहे नाभिशब्दात् 'उगवादिभ्यो यत्' इति यत्प्रत्यये 'नाभि नभं च' इति नाभेर्नभादेशे 'यस्येति च' इति इकारलोपे विभक्तिकार्ये 'नभ्यम्' ( अञ्जनम् ) इति ।

शून्यम् ( ई० ४२ )—शुने हितमिति विग्रहे 'उगवादिभ्यो यत्' इति श्वन्शब्दात् यति प्रत्यये 'शुनः सम्प्रसारणं वा च दीर्घत्वम्' इति गणसूत्रेण सम्प्रसारणे पूर्वरूपे विभाषया दीर्घे च कृते विभक्तिकार्ये 'शून्यम्' इति । दीर्घाऽभावे 'शुन्यम्' इति ।

**आत्मनीनम्** ( ई० ४६, ५२ )—आत्मने हितमिति विग्रहे आत्मन्शब्दात् 'आत्माऽध्वानौ खे' इति सूत्रेण खप्रत्यये 'आयनेय-' इति खस्य ईनादेशे विभक्तिकार्ये 'आत्मनीनम्' इति।

**मातृभोगीणः** ( ई० ५० )—मातुर्भोगः शरीरम्, तस्मै हितमिति विग्रहे मातृभोगशब्दात् 'आत्मन्विश्वजनभोगोत्तरपदात् खः' इति खप्रत्यये 'आयनेयनीय-' इति खस्य ईनादेशे 'यस्येति च' इत्यलोपे 'कुमति च' इति णत्वे विभक्तिकार्ये 'मातृभोगीणः' इति।

इति छतयोरधिकारप्रकरणम्।



# अथ ठञधिकारप्रकरणम्

**नैष्किकम्**—निष्केण क्रीतमिति विग्रहे 'असमासे निष्कादिभ्यः' इति निष्कशब्दात् ठकि ठस्यैकादेशे 'किति च' इति वृद्धौ 'भत्वादलोपे विभक्तिकार्ये 'नैष्किकः' इति। ( निष्कः = सुवर्णमुद्रा )

**सार्वभौमः** ( ई० ५१ )—सर्वभूमेरीश्वरः इति विग्रहे सर्वभूमिशब्दात् 'तत्रेश्वरः' इति अण्प्रत्यये 'अनुशतकादीनां च' इत्युभयपदवृद्धौ भत्वादिलोपे विभक्तिकार्ये 'सार्वभौमः' इति।

**अर्घ्यः** ( ई० ५३ )—अर्घमर्हतीति विग्रहे 'अर्घशब्दात् 'दण्डादिभ्यो यत्' इति यति भत्वादलोपे विभक्तिकार्ये 'अर्घ्यः' इति।

**वध्यः** ( ई० ४० )—वधमर्हतीति विग्रहे वधशब्दात् 'दण्डादिभ्यो यत्' इति यति भत्वादलोपे विभक्तिकार्ये 'वध्यः' इति।

**आह्निकम्** ( ई० ४९ )—अह्ना निर्वृत्तमिति विग्रहे 'तेन निर्वृत्तम्' इति ठकि ठस्य इकादेशे 'किति च' इति वृद्धौ भत्वादलोपे विभक्तिकार्ये 'आह्निकम्' इति।

इति ठञधिकारप्रकरणम्।



# अथ भावकर्मार्थकप्रकरणम्

प्रथिमा—पृथोर्भावः प्रथिमा। पृथुशब्दात् 'पृथ्वादिभ्य इमनिज्वा' इति इमनिचि 'पृथु इमन्' इति स्थिते 'र ऋतो हलादेर्लघोः' इति ऋकारस्य रकारादेशे भत्वे भत्वात् 'टेः' इति थकारोत्तरवर्त्युकारलोपे तद्धितान्तत्वात् प्रातिपदिकत्वे सौ 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घे हल्ङ्यादिलोपे नलोपे 'प्रथिमा' इति। इमनिजभावपक्षे 'इगन्ताच्च लघुपूर्वात्' इति अणि वृद्धौ रपरत्वे 'ओर्गुणः' इति गुणे अवादेशे विभक्तिकार्ये 'पार्थवम्' इति। (त्वप्रत्यये पृथुत्वम्' इति। तल्प्रत्यये 'पृथुता' इति)

म्रदिमा (ई० ५२)—मृदोर्भावः—म्रदिमा, मार्दवम्, मृदुत्वम्, मृदुता इति। (साधनप्रकारस्तु पूर्ववत्)

स्तेयम् (ई० ४२)—स्तेनस्य भावः कर्म वेति विग्रहे 'स्तेनाद्यन्नलोपः' इति यति नलोपे विभक्तिकार्ये 'स्तेयम्' इति।

कापेयम् (ई० ५०)—कपेर्भावः कर्म वेति विग्रहे 'कपिज्ञात्योर्ढक्' इति ढकि ढस्य 'आयनेय—' इति एयादेशे 'किति च' इत्यादिवृद्धौ भत्वादिलोपे विभक्तिकार्ये 'कापेयम्' इति।

पौरोहित्यम् (ई० ४९)—पुरोहितस्य भावः कर्म वेति विग्रहे 'पत्यन्तपुरोहितादिभ्यो यक्' इति यकि 'किति च' इत्यादिवृद्धौ भत्वात् 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'पौरोहित्यम्' इति।

रामणीयकम् (ई० ४८)—रमणीयस्य भावः कर्म वेति विग्रहे रमणीयशब्दात् 'योपधात् गुरुपोत्तमाद् वुञ्' इति वुञि वोरकादेशे आदिवृद्धौ भत्वादलोपे विभक्तिकार्ये 'रामणीयकम्' इति।

आभिधानीयकम् (ई० ५१)—अभिधानीयस्य भावः कर्म वेति विग्रहे 'योपधात्—' इति अभिधानीयशब्दाद् वुञि वोरकादेशे ञित्वादादि वृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धम्।

मानोज्ञकम् (ई० ५०)—मनोज्ञस्य भावः कर्म वेति विग्रहे 'द्वन्द्वमनोज्ञादिभ्यश्च' इति वुञि वोरकादेशे ञित्वादादिवृद्धौ भत्वादलोपे विभक्तिकार्ये 'मानोज्ञकम्' इति।

इति भावकर्मार्थकप्रकरणम्।

—o—

# अथ पाञ्चमिकप्रकरणम्

**सर्वाङ्गीणः**—सर्वाङ्गं व्याप्नोतीति सर्वाङ्गीणः। सर्वाङ्गशब्दात् 'तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति' इति सूत्रेण खप्रत्यये खस्य ईनादेशे भत्वादल्लोपे णत्वे विभक्तिकार्ये 'सर्वाङ्गीणः' इति।

**अविपटः** ( ई० ४२ )—अवीनां विस्तारः इति विग्रहे 'विस्तारे पटच्' इति अविशब्दात् पटच्प्रत्यये विभक्तिकार्ये 'अविपटः' इति।

**कर्मठः**—कर्मणि घटते इति विग्रहे 'कर्मणि घटोऽठच्' इति सूत्रेण सप्तम्यन्तात् कर्मन्शब्दात् अठचि 'नस्तद्धिते' इति टिलोपे विभक्तिकार्ये 'कर्मठः' इति ( अठचि ठस्य अङ्गात्परत्वाऽभावादिकादेशो न )

**पण्डितः**—सदसद्विवेकिनी बुद्धिः पण्डा, पण्डा = बुद्धिः, सञ्जाताऽस्येति विग्रहे पण्डाशब्दात् प्रथमान्तात् 'तदस्य सञ्जातं तारकादिभ्यः इतच्' इति इतचि भत्वादल्लोपे विभक्तिकार्ये 'पण्डितः' इति।

प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम।
ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः।
आयामस्तु प्रमाणं स्यात्, संख्या बाह्या तु सर्वतः॥

प्रथमः = द्वयसच् प्रत्ययः, द्वितीयः = दघ्नच् प्रत्ययः, ऊर्ध्वेति—ऊर्ध्वावस्थितेन येन मीयते तत् 'ऊर्ध्वमानम्' यथा—ऊर्वादि। एवं च मात्रच्प्रत्ययः प्रमाणे = परिच्छेदकमात्रे भवति। दघ्नच् द्वयसचौ तूर्ध्वमाने एव भवतः इति लब्धम्।

**कियान्**—किं परिमाणमस्येति विग्रहे 'किमिदम्भ्यां वो घः। इति वतुपि वस्य घत्वे च विहिते 'इदं किमो रीश्की' इति किमः की इत्यादेशे 'की घत्' इति स्थिते 'आयनेय-' इति घस्य इयादेशे 'यस्येति च' इति ईकारलोपे 'कियत्' इति जाते कृदन्तत्वात् सौ उगित्वान्नुमि उपधादीर्घे संयोगान्तलोपे हल्ङ्यादिलोपे 'कियान्' इति।

**इयान्**—इदं परिमाणमस्येति विग्रहे ( पूर्ववत् ) वतुपि वस्य घत्वे इदमः ईशादेशे घस्य इयादेशे ईकारलोपे सौ उगित्वान्नुमि दीर्घे संयोगान्तलोपे सुलोपे 'इयान्' इति।

विंशः—विंशतेः पूरणः इति विग्रहे विंशतिशब्दात् 'तस्य पूरणे डट्' इति डटि 'तिविंशतेर्डिति' इति तिलोपे असिद्धवदत्राऽभात्' इति तिलोपस्यासिद्धत्वात् 'यस्येति च' इत्यलोपस्याप्राप्तया 'अतो गुणे' इति पररूपे विभक्तिकार्ये 'विंशः' इति ।

षष्ठः—( ई० ४८ )—षण्णां पूरणः इति विग्रहे 'तस्य पूरणे डट्' इति डटि 'षट्कतिकतिपयचतुरां थुक्' इति थुकागमे ष्टुत्वे विभक्तिकार्ये 'षष्ठः' इति ।

चतुर्थः ( ई० ४१ )—चतुर्णां पूर्णः इत्यर्थे षष्ठयन्तात् चतुर्शब्दात् 'तस्य पूरणे डट्' इति डटि सुब्लुकि 'षट्कति—' इति थुकि विभक्तिकार्ये 'चतुर्थः' इति ।

तुरीयः तुर्यः ( ई० ५२ )—चतुर्णां पूर्णः इति विग्रहे षष्ठयन्तात् चतुर्शब्दात् 'चतुरश्छयतावाद्यक्षरलोपश्च' इति छप्रत्यये चतुरश्चकारस्य लोपे च कृते सुब्लुकि 'आयनेय—' इति छस्य ईयादेशे विभक्तिकार्ये 'तुरीयः' इति। यत्प्रत्यये तु 'तुर्यः' इति।

अच्छावाकीयम् ( ई० ४० )—अच्छावाक् शब्दोऽस्त्यस्मिन् इति विग्रहे 'मतौ छः सूक्तसाम्नोः' इति छप्रत्यये छस्य ईयादेशे भत्वादलोपे विभक्तिकार्ये 'अच्छावाकीयम्' इति ।

श्रोत्रियः—छन्दोऽधीते इत्यस्मिन्नर्थे 'श्रोत्रियंश्छन्दोऽधीते' इति निपातनात् छन्दःशब्दात् घन्प्रत्यये छन्दःशब्दस्य श्रोत्रादेशे च विहिते घस्य इयादेशे भत्वादलोपे विभक्तिकार्ये 'श्रोत्रियः' इति ।

कृतपूर्वी—कृतं पूर्वमनेनेति विग्रहे 'सुप्सुपे'ति समासनिष्पन्नात् कृतपूर्वशब्दात् 'सपूर्वाच्च' इति इनि प्रत्यये भत्वादलोपे प्रातिपदिकात् सौ दीर्घे सुलोपे नलोपे 'कृत-पूर्वी' इति ।

इष्टी ( ई० ४९ )—इष्टमनेनेति विग्रहे 'इष्टादिभ्यश्च' इति इनि प्रत्यये भत्वाद-लोपे सौ दीर्घे सुलोपे नलोपे 'इष्टी' इति ।

साक्षी ( ई० ५० )—साक्षाद् द्रष्टा—साक्षी । 'सक्षाद् द्रष्टरि संज्ञायाम्' इति सूत्रेण साक्षादित्यव्ययात् इनि प्रत्यये 'अव्ययानां भमात्रे टिलोपः' इति टिलोपे सौ दीर्घे सुलोपे नलोपे 'साक्षी' इति ।

इति पाञ्चमिकप्रकरणम् ।



# अथ मत्वर्थीयप्रकरणम्

**तदस्याऽस्त्यस्मिन्निति मतुप्**—तदिति प्रथमान्तादस्य अस्मिन् वा अस्त्यर्थे मतुप् स्यादित्यर्थः। अत्र सूत्रे इति शब्दात् विषयविशेषो लभ्यते। तथाहि हरिकारिका—

भूमनिन्दा प्रशंसासुनित्ययोगेऽतिशायने।
सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः॥ इति।

**विदुष्मान्**—विद्वस्शब्दात् 'तदस्याऽस्त्यस्मिन्' इति मतुपि 'तसौ मत्वर्थे' इति भत्वात् 'वसोः सम्प्रसारणम्' इति सम्प्रसारणे पूर्वरूपे सस्य षत्वे 'विदुष्मत्' इति, तस्मात् सौ उगित्वान्नुमि 'अत्वसन्तस्य-' इति दीर्घे सुलोपे संयोगान्तलोपे 'विदुष्मान्' इति।

**फेनिलः** ( ई० ४८ )—'फेनादिलच्च' इति फेनशब्दात् इलच् प्रत्यये भत्वादलोपे विभक्तिकार्ये 'फेनिलः' इति। लच्प्रत्यये 'फेनलः' इति। पक्षे—मतुपि 'फेनवान्' इति।

**द्रुमः** ( ई० ४४, ४७ )—द्रुः ( शाखा ) अस्यास्तीति विग्रहे 'द्युद्रुभ्यां मः' इति द्रुशब्दात् मप्रत्यये विभक्तिकार्ये द्रुमः' ( वृक्षः ) इति। मतुपि तु 'द्रुवान्' इति।

**केशवः** ( ई० ५१ )—केशोऽस्यास्तीति विग्रहे केशशब्दात् 'केशाद्वोऽन्यतरस्याम्' इति वप्रत्यये स्वादिकार्ये 'केशवः' इति। सूत्रस्थाऽन्यतरस्याङ्ग्रहणेनैव पक्षे मतुप्प्रसिद्धे वाग्रहणमिनिठनोः समावेशार्थम्। तेन पक्षे—केशी, केशिकः, केशवान् इति च सिद्धं भवति।

**दन्तावलो हस्ती** ( ई० ५० )—दन्ताः सन्ति अस्येति विग्रहे 'दन्तशिखात् संज्ञायाम्' इति वलचि 'वले' इति सूत्रेण दीर्घे विभक्तिकार्ये 'दन्तावलः' इति।

**तुन्दिलः** ( ई० ४९ )—'तुन्दादिभ्य इलच्' इति सूत्रेण तुन्दशब्दाद् इलचि भत्वादलोपे विभक्तिकार्ये 'तुन्दिलः' इति।

**शुभंयुः**—शुभमस्यास्तीति विग्रहे शुभशब्दात् 'अहं शुभमोर्युस्' इति युसि मस्यानुस्वारे विभक्तिकार्ये 'शुभंयुः' इति। शुभमिति मान्तमव्ययं शुभे वर्तते, तेन शुभंयुः इत्यस्य 'शुभान्वितः' इत्यर्थः।

इति मत्वर्थीयप्रकरणम्।

---

# अथ प्राग्दिशीयप्रकरणम्

**क, कुत्र, कस्मिन्** ( ई० ४२, ४४ )—सप्तम्यन्तात् किम्शब्दात् 'किमोऽत्' इत्यति सुब्लुकि 'क्वाति' इति किमः क्वादेशे पररूपे तद्धितान्तत्वात् सौ तसिलन्त-स्याव्ययत्वेन सुब्लुकि 'क्व' इति । पक्षे 'सप्तम्यास्त्रल्' इति त्रलि 'कुत्र' इति । तद-भावे 'कस्मिन्' इति ।

**कदा**—कस्मिन् काले कदा । सप्तम्यन्तात् किम्शब्दात् 'सर्वैकान्य–' इति दाप्रत्यये सुब्लुकि 'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञायाम् 'किमः कः' इति कादेशे अव्ययत्वात् सोर्लुकि 'कदा' इति ।

**एतर्हि** ( ई० ५२ )—अस्मिन् काले एतर्हि । इदम्शब्दात् सप्तम्यन्तात् 'इदमो र्हिल्' इति र्हिल्प्रत्यये सुब्लुकि 'एतेतौ रथोः' इति इदमः एतादेशे सौ तसि-लादिषु पाठात् अव्ययत्वात् सोर्लुकि 'एतर्हि' इति ।

**तर्हि**—सप्तम्यन्तात् तत्शब्दात् 'अनद्यतने र्हिलन्यतरस्याम्' इति र्हिलि प्रत्यये अत्वे पररूपे सौ अव्ययत्वात् सोर्लुकि 'तर्हि' इति पक्षे दाप्रत्यये सति 'तदा' इति ।

**इत्थम्** ( ई० ४१ )—अनेन प्रकारेण, एतेन प्रकारेण वा इत्थम् । इदम्-शब्दात 'इदमस्थमुः' इत्यनेन, एतत्शब्दात्तु 'एतदोऽपि वाच्यम्' इत्यनेन थमुप्रत्यये 'एतेतौ रथोः' इत्यनेन इदमः एतदश्च इदादेशे अव्ययत्वात् सोर्लुकि 'इत्थम्' इति ।

इति प्राग्दिशीयप्रकरणम् ।



# अथ प्रागिवीयप्रकरणम्

**चतुर्धा** ( ई० ५० )—चतुर्शब्दात् 'संख्याया विधार्थे धा' इति स्वार्थे धाप्र-त्यये सोर्लुकि 'चतुर्धा' इति ।

**लघीयान्** ( ई० ३० )—अयमेषामतिशयेन लघुरिति विग्रहे 'द्विवचनविभ-ज्योपपदे तरबीयसुनौ' इति ईयसुनि अनुबन्धलोपे भसंज्ञायां 'टेः' इति घकारोत्तर-वर्त्युकारस्य लोपे 'लघीयस्' शब्दात् प्रातिपदिकत्वेन सौ 'उगिदचाम्' इति नुमि 'सान्तमहतः' इति दीर्घे सुलोपे संयोगान्तलोपे तत्सिद्धिः ।

**श्रेष्ठः** ( ई० २८ )—अयमेषामतिशयेन प्रशस्यः इति विग्रहे प्रशस्य शब्दात् 'अतिशायने तमबिष्ठनौ' इति इष्ठनि प्रत्यये अनुबन्धलोपे 'प्रशस्यस्य श्रः' इति आदेशे 'प्रकृत्यैकाच्' इति प्रकृतिभावे 'टेः' इति टिलोपाभावे गुणे विभक्तिकार्ये तत्सिद्धिः।

**श्रेयान्** ( ई० ३४ )—अयमनयोरतिशयेन प्रशस्यः इति विग्रहे प्रशस्यशब्दात् 'द्विवचनविभज्योपपदे' इतीयसुनि अनुबन्धलोपे 'प्रशस्यस्य श्रः' इति आदेशे 'प्रकृत्यैकाच्' इति प्रकृतिभावेन टिलोपाभावे गुणे प्रातिपदिकात् सौ उगित्वान्नुमि 'सान्तमहतः' इति दीर्घे सुलोपे तत्सिद्धिः।

**ज्यायान्** ( ई० २८ )—द्वयोर्मध्येऽतिशयेन प्रशस्यः इति विग्रहे प्रशस्यशब्दात् 'द्विवचनविभज्योपपदे तरबीयसुनौ' इतीयसुनि अनुबन्धलोपे 'ज्य च' इति ज्यादेशे 'प्रकृत्यैकाच्' इति प्रकृतिभावाट्टिलोपाभावे 'ज्यादादीयसः' इत्यनेन 'आदेः परस्ये'ति सहकारात् प्रत्ययस्यादेरीकारस्याऽऽकारादेशे सवर्णदीर्घे 'ज्यायस्' शब्दात् प्रातिपदिकसंज्ञायां सौ उगित्वान्नुमि अनुबन्धलोपे उपधादीर्घे सुलोपे संयोगान्तलोपे तत्सिद्धिः।

**स्थविष्ठः** ( ई० ४६ )—अयमनयोरतिशयेन स्थूलः इति विग्रहे 'अतिशायने तमबिष्ठनौ' इतीष्ठनि 'स्थूलदूरयुवह्रस्व–' इति सूत्रेण इष्ठनि प्रत्यये परे 'ल' इत्यस्य लोपे ऊकारस्य गुणे च कृतेऽवादेशे विभक्तिकार्ये 'स्थविष्ठः' इति। 'ओर्गुणः' इति गुणादेशस्तु न, लोपस्याभीयत्वेन असिद्धत्वात्।

**प्रेष्ठः** ( ई० ५१ )—अयमनयोरतिशयेन प्रियः इति विग्रहे 'अतिशायने तमबिष्ठनौ' इतीष्ठनि 'प्रियस्थिर–' इति सूत्रेण प्रियस्य प्रादेशे 'आद्गुणः' इति गुणे विभक्तिकार्ये 'प्रेष्ठः' इति। ( अकारोच्चारणसामर्थ्यात् 'यस्येति च' इति टिलोपो न )।

**विद्वद्देशीयः** ( ई० ५२ )—ईषदूनो विद्वान्–विद्वद्देशीयः। 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति विद्वदिति प्रातिपदिकात् देशीयर्प्रत्यये अरत्वे सुलोपे रेफस्य विसर्गे 'विद्वद्देशीयः' इति।

**कुटीरः** ( ई० ४८ )—ह्रस्वा कुटी–कुटीरः। कुटीशब्दात् 'कुटीशमीशुण्डाभ्यो रः' इति रप्रत्यये विभक्तिकार्ये 'कुटीरः' इति।

इति प्रागिवीयप्रकरणम्।



# अथ स्वार्थिकप्रकरणम्

बहुशः ( ई० ४८ )—बहूनि ( बहुभ्यो वा ) ददातीति विग्रहे बहुशब्दात् 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' इति स्वार्थे शसि प्रत्यये 'बहुशस्' इति, तस्मात् सौ अव्ययत्वात् सुब्लुकि सकारस्य रुत्वे विसर्गे 'बहुशः' ।

पटपटा करोति ( ई० २९ )—'डाचि विवक्षिते द्वे बहुलम्' इति वार्तिकेन डाचः प्रागेव 'पटत्' शब्दस्य द्वित्वे 'पटत् पटत्' इति दशायाम् 'अव्यक्तानुकरणाद्—' इति डाचि अनुबन्धलोपे 'तस्य परमाम्रेडितम्' इति परस्य 'पटत्' शब्दस्याम्रेडितसंज्ञायां 'नित्यमाम्रेडिते डाचीति वक्तव्यम्' इति वार्तिकेन पूर्वपटत्–सम्बन्धिनस्तकारस्य परपटत्–सम्बन्धिनः पकारस्य चोभयोः पररूपे डाच्प्रत्यये परे भसंज्ञायां 'टेः' इत्यनेन टिलोपे अव्ययत्वात् सुब्लुकि उक्तं रूपं सिद्धम् ।

आतिथ्यम् ( ई० ५१ )—अतिथये इदमिति विग्रहे 'अतिथेर्ञ्यः' इति चतुर्थ्यन्तात् अतिथिशब्दात् ञ्यप्रत्यये सुब्लुकि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इति इलोपे विभक्तिकार्ये 'आतिथ्यम्' इति ।

मृत्स्ना ( ई० ५२ )—प्रशस्ता मृत् इति विग्रहे 'प्रशंसायां रूपप्' इति सूत्रं प्रबाध्य 'सस्नौ प्रशंसायाम्' इति सूत्रेण मृत्शब्दात् स्वार्थे स्नप्रत्यये विभक्त्यादिकार्ये 'मृत्स्ना' इति ।

दुःखा करोति ( ई० ४० )—'दुःखात् प्रातिलोम्ये' इति सूत्रेण प्रातिकूल्येऽर्थे दुःखशब्दात् डाच्प्रत्यये विभक्तिकार्ये 'दुःखा करोति' इति । पीडयतीत्यर्थः ।

इति मत्वर्थीयप्रकरणम् ।



# अथ द्विरुक्तप्रकरणम्

एकैकयाहुत्या—एकेत्यस्य 'नित्यवीप्सयोः' इति द्विर्वचने सति एकया एकया इति स्थिते 'एकं बहुव्रीहिवत्' इति बहुव्रीहिवत्त्वेन समुदायस्य प्रातिपदिकत्वात् सुपो लुकि पूर्वखण्डस्य पुंवत्त्वे कृते वृद्धौ समुदायात् पुनस्तृतीयोत्पत्तौ 'एकैकयेति' सिद्धम् ।

गतगतः ( ई० ४१, ४२ )—विरहात् पीड्यमानस्येयमुक्तिः । 'अबाधे च' इत्यनेन पीडायां द्वित्वे बहुव्रीहिवद्भावे च कृते सुब्लुकि विभक्तिकार्ये 'गतगतः' इति।

दलद्वये टाबभावः, क्लीबे चाऽद्ड्विरहः स्वमोः ।
समासे सोरलुक् चेति, सिद्धं बाहुलकात्त्रयम् ॥

'कर्मव्यतिहारे सर्वनाम्नः–' इत्यत्र बहुलग्रहणस्य प्रयोजनमाह–'दलद्वयेति । स्त्रीलिङ्गेषु 'अन्य–पर–इतरशब्देषु कर्मव्यतिहारे द्वित्वे सति 'अन्योन्यम्' इत्यादौ पूर्वोत्तरखण्डयोः टाब्निवृत्तिर्बहुलग्रहणस्य प्रथमं प्रयोजनम् । क्लीबे ( नपुंसके ) च 'अन्योन्यम्' 'इतरेतरम्' इत्यादौ 'अद्ड्डतरादिभ्यः–' स्वमोः प्राप्तोऽद्ड्बाहुलकात् न भवतीति तस्य द्वितीयं प्रयोजनम् । अन्येन आश्रयः = अन्याश्रयः इत्यादौ सोर्लुक् प्राप्तः बाहुलकात् न भवतीति सोरलुक् चेति तृतीयं प्रयोजनम् ।

इति द्विरुक्तप्रकरणम् ।

# अथ स्त्रीप्रत्ययप्रकरणम्

**पञ्चाजी** ( ई० ४२ )—पञ्चानामजानां समाहारः इति विग्रहे 'तद्धितार्थ–' इति द्विगुसमासे सुब्लुकि 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीत्वे 'द्विगोः' इति ङीपि 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'पञ्चाजी' इति । अत्र समासार्थभूतो यः समाहारः तन्निष्ठं स्त्रीत्वं पञ्चाजेति समुदाये सत्त्वेन 'अजाद्यतष्टाप्' इत्यत्र 'अजाद्यतः' इति षष्ठीमाश्रित्य अजादीनाम् अजन्तस्य च वाच्ये स्त्रीत्वे टाप्–इत्येवम् अजादिभिः स्त्रीत्वस्य विशेषणादत्र न टाप् ।

**अतिधीवरी** ( ई० ५० )—धीवानमतिक्रान्ता–अतिधीवरी । 'अन्येभ्योऽपि दृश्यते' इति क्वनिप् प्रत्यये 'घुमास्थे'तीत्वे 'वनो र च' इति वन्नन्तात् अतिधीवन्शब्दात् स्त्रियां ङीपि रश्चान्तादेशे 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'अतिधीवरी' इति ।

**शर्वरी** ( ई० ५१ )—शॄधातोः 'अन्येभ्योऽपि दृश्यते' इति वनिपि गुणे रपरत्वे 'वनो र च' इति स्त्रियां ङीपि रश्चान्तादेशे भत्वादलोपे विभक्तिकार्ये 'शर्वरी' इति ।

**सर्विका** ( ई० ४८ )—सर्वशब्दात् स्त्रीत्वविवक्षायां टापि सवर्णदीर्घे 'सर्वा' इति । ततः सर्वाशब्दात् एकादेशस्य पूर्वान्तत्वेन ग्रहणात् 'अव्ययसर्वनाम्ना-

मकच् प्राक् टेः' इति टेः प्रागकचि 'सर्वकाशब्देऽस्मिन् 'प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः' इति ककारात् पूर्वस्य अत इत्वे विभक्तिकार्ये 'सर्विका' इति ।

**कारिका** ( ई० ५२ )—कृञो ण्वुलि अकादेशे वृद्धौ रपरत्वे 'कारक' इति । तस्मात् कारकशब्दात् टापि सवर्णदीर्घे 'प्रत्ययस्थादि'ति कात्पूर्वस्य रेफादकारस्य इत्वे विभक्तिकार्ये 'कारिका' इति ।

**देवी** ( ई० ४५ )—'टिड्ढाणञ्–' इति सूत्रे टित्वन्तु प्रातिपदिकस्य क्वचित् प्रत्ययकृतं, क्वचिच्च प्रकृतिकृतम् । तत्राद्यस्योदाहरणं 'कुरुचरी' इति । द्वितीयस्योदाहरणं नदट्–नदी । देवट्–देवी' इति । पचादिषु 'नदट्–देवट्' इत्यनयोः पाठात् स्वत एव टित्वमिति ताभ्यां ङीपि 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'नदी' 'देवी' इत्युभयं सिद्धं भवति ( घेटष्टित्वात् ङीपि 'स्तनन्धयी' इत्युदाहरणान्तरं तु कृदन्ते मृग्यम् )

**सौपर्णेयी** ( ई० ५१ )—सुपर्ण्या अपत्यं स्त्री इति विग्रहे सुपर्णीशब्दात् 'स्त्रीभ्यो ढक्' इति ढकि ढस्य एयादेशे 'यस्येति च' इति टिलोपे 'किति च' इति वृद्धौ 'सौपर्णेय' इति । तस्मात् सौपर्णेयशब्दात् 'टिड्ढाऽणञ्–' इतिङीपि 'यस्येति च' इति टिलोपे विभक्तिकार्ये 'सौपर्णेयी' इति ।

**ऐन्द्री** ( ई० ४६ )—इन्द्रो देवताऽस्येति विग्रहे 'साऽस्य देवता' इत्यणि वृद्धौ 'टिड्ढाणञ्–' इति ङीपि भत्वादलोपे विभक्तिकार्ये 'ऐन्द्री' इति ।

**गार्गी** ( ई० ४९ )—गर्गस्याऽपत्यं स्त्रीति विग्रहे 'गर्गादिभ्यो यञ्' इति गर्गशब्दात् यञि आदिवृद्धौ भत्वादलोपे 'गार्ग्य' इति। तस्मात् स्त्रीत्वविवक्षायां 'यञश्च' इति ङीपि भत्वादलोपे 'हलस्तद्धितस्य' इति यलोपे विभक्त्यादिकार्ये तत्सिद्धिः ।

**कुमारी** ( ई० २७ )—बाल्यवाचकात् कुमारशब्दात् स्त्रीत्वविवक्षायां 'वयसि प्रथमे' इति ङीपि अनुबन्धलोपे भसंज्ञायां 'यस्येति च' इत्यलोपे प्रातिपदिकत्वात् सौ 'हल्ङ्याब्भ्यः' इति सुलोपे तत्सिद्धिः ।

**एनी** ( ई० ३० )—एतशब्दः श्वेतपर्यायः, तस्मात् स्त्रीत्वविवक्षायां 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीपि तकारस्य नकारे च कृते भत्वाद् 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'एनी' इति । पक्षे अदन्तत्वाट्टापि 'एता' इत्येव । ङीबभावे नत्वमपि न भवति, ङीपा सन्नियोगशिष्टत्वादिति तत्त्वविदः ।

इन्द्राणी—इन्द्रस्य स्त्रीति विग्रहे पुंयोगलक्षणे ङीषि सिद्धेऽपि 'इन्द्रवरुण-' इत्यादिसूत्रेण ङीषूसन्नियोगेन आनुगागमे च जाते 'उकारस्योच्चारणार्थत्वेन दर्शनाऽभावे ककारस्येत्संज्ञायां लोपे च कृते सवर्णदीर्घे णत्वे विभक्तिकार्ये तत्सिद्धम् ।

हिमानी—महद्धिममिति विग्रहे हिमशब्दात् 'हिमारण्ययोर्महत्वे' इति वार्तिकेन ङीषि आनुगागमे च जाते अनुबन्धलोपे सवर्णदीर्घे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

अर्याणी ( ई० २८ )—अर्यशब्दात् स्त्रीत्वविवक्षायाम् 'अर्यक्षत्रियाभ्यां वा स्वार्थे' इति वार्तिकेन ङीषि आनुकि च कृते भत्वादलोपे णत्वे विभक्तिकार्ये 'अर्याणी' इति । पक्षे टापि 'आर्या' इति । स्वामिनी वैश्या वेत्यर्थः । पुंयोगे तु अर्यस्य स्त्री-'अर्यी' इति भवति ।

**द्विबिस्ता** ( ई० ४२ )—द्वौ बिस्तौ पचतीति विग्रहे 'तद्धितार्थे'ति द्विगुसमासे ठकि 'अध्यर्ध' इति ठगो लुकि 'अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि' इति 'द्विगोः' इति ङीपि प्रतिषिद्धे अदन्तत्वात् टापि विभक्त्यादिकार्ये 'द्विबिस्ता' इति ।

**कुण्डोध्नी** ( ई० ५२ )—कुण्डमिव ऊधो यस्याः इति विग्रहे समासे सुब्लुकि गुणे 'ऊधसोऽनङ्' इत्यङि 'बहुव्रीहेरूधसो ङीष्' इति ङीषि 'अल्लोपो नः' इत्यलोपे विभक्तिकार्ये 'कुण्डोध्नी' इति ।

**मनायी** ( ई० ४६ )—मनोः स्त्री=मनावी, मनायी, मनुः । 'मनोरौ वा' इति सूत्रेण ङीप्सन्नियोगसिष्टेन औकारान्तादेशे आवि विभक्तिकार्ये 'मनावी' इति । ङीप्सन्नियोगसिष्टेनैकारादेशे आयादेशे विभक्तिकार्ये 'मनायी' इति । पक्षे 'मनुः' इति भवति ।

**मातुलानी, उपाध्यायानी** ( ई० ४५, ४६ )—मातुलस्य स्त्री-मातुलानी-मातुली । एवम्-उपाध्यायस्य स्त्री-उपाध्यायानी-उपाध्यायी । इति । उभयत्र 'मातुलोपाध्याययोरानुग्वा' इति वार्तिकेन विभाषया ङीप् आनुक् च भवति ।

**अतिकेशी** ( ई० ४६ )—केशानमतिक्रान्तेति विग्रहे समासे सुब्लुकि 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीपि टिलोपे विभक्तिकार्ये 'अतिकेशी' इति ।

**अद्रवं मूर्तिमत्स्वाङ्गं, प्राणिस्थमविकारजम् ।**
**अतस्थं तत्र दृष्टं च तेन चेत्तथा युतम् ॥**

अयम्भावः—'स्वाङ्गाच्चोपसर्जनात्' इति सूत्रे 'स्वाङ्गपदेन स्वस्य = अवयवीभूतस्य, अङ्गं स्वाङ्गम्' इति कथने 'सुमुखा शाला' इत्यत्राऽपि ङीष् स्यात्—

मुखस्य शालाङ्गत्वात् । किञ्च 'सुकेशी रथ्या' इत्यत्र ङीप् न स्यात्—केशानां प्राण्यङ्गत्वाऽभावात् । तस्मादव्याप्त्यतिव्याप्तिवारणाय उक्तसूत्रे 'अद्रवमित्यादिना त्रिविधं स्वाङ्गं गृह्यते ।

( १ ) 'अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्'=न विद्यते द्रवो यस्य तद् अद्रवम्, अतः सु = शोभनः, स्वेदः = घर्मजः—उदकप्रस्रवो यस्याः सा 'सुस्वेदा' इत्यत्र ङीष् न । मूर्तिमत् = स्पर्शवद् द्रव्यपरिमाणं मूर्तिस्तद्वत् । अत एव 'सुज्ञाना' इत्यत्र ङीष् न । प्राणिस्थम् = प्राणिनि-प्राणिवति जन्तौ विद्यमानम् । अतः 'सुमुखा शाला' इत्यत्र ङीष् न । अविकारजम् = रोगादिविकाराजन्यम् । अतः सु = अधिकः, शोफः = श्वयथुः, यस्या सा 'सुशोफा' इत्यत्र ङीष् न ।

( २ ) अतत्स्थं तत्र दृष्टं च = अतत्स्थं = सम्प्रति अप्राणिस्थमपि, च = किन्तु, तत्र = प्राणिनि, दृष्टं = दृश्यमानं, यत्तदपि स्वाङ्गमित्यर्थः । अतः 'सुकेशी रथ्या' ( ई० ४२ ) इत्यत्र ङीष् सिद्धः । रथ्यां = विथ्यां, विकीर्णः केशः सम्प्रति अप्राणिस्थत्वेऽपि कदाचित् प्राणिस्थत्वादिति भावः ।

( ३ ) तेन चेत्तथा युतम् = येनाङ्गेन प्राणिरूपं वस्तु यथायुतं, तेन तत्सदृशेन अङ्गेन तद् = अप्राणिरूपं वस्तु, तथा प्राणिवत्, युतं = युक्तं चेत् = स्यात्, तदपि प्राणिनि दृष्टं स्वाङ्गमित्यर्थः । अत एव 'सुस्तनी प्रतिमा' इत्यत्र ङीष् सिद्धः ।

कवरपुच्छी ( ई० ४४ )—कवर इव पुच्छी यस्याः सा 'कवरपुच्छी' । 'कवरमणिविषशरेभ्यो नित्यम्' इति वार्तिकेन नित्यं ङीष् ।

शूर्पणखा ( ई० ५१ )—'शूर्पणखा' नामराक्षसीति रामायणे प्रसिद्धा । शूर्पाणीव कररुहाः यस्या इति अस्वपदविग्रहः । संज्ञात्वेन नित्यसमासत्वात् नखमुखात् संज्ञायाम्' इति ङीष्निषेधे सति 'पूर्वपदात् संज्ञायामगः' इति णत्वे सुबाद्युत्पत्तिः । यदा तु शूर्पवन्नखानि यस्या इति योगमात्रं विवक्ष्यते, न तु संज्ञा, तदा असंज्ञात्वात् न ङीन्निषेधो न वा णत्वं भवति ।

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या, गोत्रं च चरणैः सह ॥

भाष्योक्तं त्रिविधं जातिलक्षणं प्रपञ्चयति आकृतिग्रहणेति । गृह्यते इति ग्रहणम्, आकृतिः ग्रहणं यस्याः सा 'आकृतिग्रहणा-जातिः' अनुगतसंस्थानव्यङ्ग्येत्यर्थः ।

उदाहरणं तु तटी, घटी, इत्यादि । जलसमीपप्रदेशः आकृतिविशेषविशिष्टस्तटः, अतस्तटत्वमाकृतिव्यङ्ग्यत्वाज्जातिः, तेन तटशब्दस्य जातिवाचकत्वाद् अनियतस्त्री-लिङ्गत्वाद् अयोपधत्वाच्च 'जातेरस्त्री'ति ङीष् ।

नन्वेवं प्रथमलक्षणस्वीकारे वृषलत्वादीनां जातित्वं न स्यात्, तदवयवसन्नि-वेशस्य आकृत्यादिसाधारण्येन वृषलत्वादीनां तद्व्यङ्ग्यत्वाभावादित्याशङ्क्य द्वितीय-लक्षणमाह—'लिङ्गानां च न सर्वभाक् सकृदाख्यातनिर्ग्राह्या' इति । असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ कथनाद् व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरित्यर्थः । उदाहरणं 'वृषली' इति । वृषलं हि असर्वलिङ्गं, नपुंसकत्वाऽभावात् । एकस्यां व्यक्तौ वृषलत्वे उपदिष्टे सति तदपत्यभ्रात्रादिषु तदुपदेशं विना तस्य सुग्रहत्वात् सकृ-दाख्यातनिर्ग्राह्यं चेति 'जातेरस्त्री'ति ङीष् ।

नन्वेवमपि औपगवी, कठी इत्यादौ औपगवादेरनुगतसंस्थानव्यङ्ग्यत्वाभावात्, सर्वलिङ्गत्वाच्चेत्युभयविधिजातित्वात् ङीष् न स्यादिति तृतीयं लक्षणमाह—'गोत्रं च चरणैः सह' इति । अत्र लक्षणे गोत्रशब्देन अपत्यं विवक्षितम्, न तु पौत्र-प्रभृतीति, व्याख्यानात् । चरणशब्दस्तु शाखाध्येतरि प्रसिद्धः । तथा च अपत्य-प्रत्ययान्तः चकारात् शाखाध्येतृवाची च शब्दो जातिकार्यं लभत इत्यर्थः । तत्र प्रथमं गोत्रोदाहरणम् 'औपगवी' इति । उपगोरपत्यं स्त्रीति विग्रहे 'तस्यापत्यमि'त्यणि वृद्धौ गुणेऽवादेशे 'जातेरस्त्री'ति ङीष् । द्वितीयं चरणोदाहरणं कठेन प्रोक्तमधीयाना 'कठी' इति ।

**कुरूः** ( ई० ४८ )—कुरुदेशस्य राजा कुरुः तस्यापत्यं स्त्रीत्यर्थः । 'गोत्रं च चरणैः सह' इति जातित्वे 'ऊङुतः' इति कुरुशब्दात् ऊङि सवर्णदीर्घे स्वाद्युत्पत्तिः ।

**पङ्गूः** ( ई० ४९ )—पङ्गुशब्दस्य 'आकृतिग्रहणे'ति त्रिविधजातित्वाभावात् 'ऊङुतः' इत्यनेन ऊङोऽप्राप्तया 'पङ्गोश्च' इति ऊङि सवर्णदीर्घे स्वाद्युत्पत्तिः ।

**करभोरूः** (ई० ५२ )—करभाविव ऊरू यस्या इति विग्रहः । करभोरुशब्दस्य 'आकृतिग्रहणे'ति त्रिविधजातित्वाऽभावात् 'ऊङुतः' इत्यस्याप्राप्तया 'ऊरूत्तरपदादौ-पम्ये' इति ऊङि सवर्णदीर्घे स्वाद्युत्पत्तिः ।

**हयी** ( ई० ४६ )—इति अश्वा प्रसिद्धा अत्र हय शब्दस्य योपधत्वात् 'जाते-स्त्री'ति ङीषोऽप्राप्तिः योपधप्रतिषेधे हयगवय–' इति वार्तिकबलात् ङीषि भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः

श्वश्रूः ( ई० ४९ )—श्वशुरस्य स्त्रीति विग्रहे पुंयोगलक्षणे ङीषि प्राप्ते तद्बाधनाय 'श्वशुरस्योकाराकारलोपश्च' इति वार्तिकेन ऊङि श्वशुरशब्दस्य उकारस्य अकारस्य च लोपे विभक्तिकार्ये 'श्वश्रूः' इति।

शार्ङ्गरवी ( ई० ५० )—शृङ्गरोरपत्यमित्यर्थे शिवादिभ्योऽणि आदिवृद्धौ 'ओर्गुणः' इति गुणेऽवादेशे 'शार्ङ्गरव' इति तस्मात् जातिलक्षणे ङीषि प्राप्ते तद्बाधक 'शार्ङ्गरवाद्यञो ङीन्' इति ङीनि अकारलोपे विभक्तिकार्ये तत्सिद्धिः।

नारी ( ई० ३७ )—नृशब्दात् 'ऋन्नेभ्यः' इति ङीपि प्राप्ते तं प्रबाध्य 'नृनर-योर्वृद्धिश्च' इति ङीनि वृद्धौ च कृते रपरत्वे विभक्तिकार्ये 'नारी' इति। नरशब्दादपि जातिलक्षणे ङीषि प्राप्ते शार्ङ्गरवादित्वात् ङीनि वृद्धावकारलोपे विभक्तिकार्ये 'नारी' इति भवति।

युवतिः ( ई० ४३ )—युवन्शब्दात् स्त्रीत्वविवक्षायां 'यूनस्तिः' इति तिप्रत्यये 'स्वादिष्वि'ति पदत्वान्नलोपे विभक्तिकार्ये 'युवतिः' इति। 'युवती' इति दीर्घेकारान्तोऽपि स्त्रियां वर्तते। तत्तु युधातोर्लटः शतरि शपो लुकि उवङि उगित्वात् ङीपि 'युवती' इति। ( यौति = पत्या सह मिश्रणं करोतीत्यर्थः )

इति स्त्रीप्रत्ययप्रकरणम्।

# अथ वैदिकप्रकरणम्

**हरिभ्यां याह्योक आ** ( ई० ४५ )—'ते प्राग्धातोः' इत्यनेनात्र उपसर्गसंज्ञ-कस्य 'आ' इत्यस्य पूर्वप्रयोगे ( 'आयाहि इति ) प्राप्ते 'व्यवहिता अव्यवहिता वा गत्युपसर्गसंज्ञकाः छन्दसि पूर्वे परे वा प्रयोक्तव्याः' इत्यर्थक 'छन्दसि परेऽपि, व्यव-हिताश्च' इत्यनेन परप्रयोगे उक्तं रूपं सिद्धम्।

**श्वेतवाः** ( ई० ४२, ५०, ५१ )—श्वेता वहन्त्येनं श्वेतवाः = इन्द्रः। 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्' इति सूत्रस्य 'श्वेतवहादीनां डस्पदस्येति वक्तव्यम्' इति वार्तिकेन डसि डित्वाट्टिलोपे प्रथमैकवचने सौ 'अत्वसन्तस्ये'ति दीर्घे सुलोपे सस्य रुत्वे विसर्गे 'श्वेतवाः' इति।

**उक्थशाः** ( ई० ५० )—उक्थानि उक्थैर्वा शंसति—उक्थशा=यजमानः। 'श्वेतवहादीनां डस्पदस्येति वक्तव्यम्' इति डसि डित्वाट्टिलोपे सौ 'अत्वसन्तस्ये'ति दीर्घे सुलोपे रुत्वे विसर्गे 'उक्थशाः' इति। सम्बुद्धौ तु 'अवयाः श्वेतवाः पुरोडाश्च' इत्यनेन निपातनात् सिद्धं बोध्यम्। 'अत्वसन्तस्ये'ति दीर्घं तु न, असम्बुद्धावित्युक्तेः।

**अवयाः** ( ई० ४० )—अवोपसर्गकात् यज्धातोः 'अवयाः श्वेतवाः पुरोडाश्च' इत्यवेयजः इति सूत्रस्थवार्तिकेन निपातनात् डसि डित्वाट्टिलोपे सम्बुद्धयेकवचने सौ निपातनादनेनैव दीर्घे हल्ङ्यादिलोपे सस्य रुत्वे विसर्गे 'अवयाः' इति। 'अत्वसन्तस्ये'ति दीर्घं तु न तत्र असम्बुद्धावित्यनुवृत्तेः।

**तारिषत्** ( ई० ४४ )—तृधातोः 'लिङर्थे लेट्' इति छन्दसि लेटि 'सिब्बहुलं लेटि' इति लेटि परे मध्ये सिपि ततः लेटः स्थाने तिपि 'लेटोऽडाटौ' इत्यडागमे 'इतश्चलोपः परस्मैपदेषु' इति इतो लोपे 'सिब्बहुलं णिद्वक्तव्यः' इति सिपः णिद्वद्भावे इडागमे वृद्धौ षत्वे 'तारिषत्' इति।

**रोहिष्यैः** ( ई० ४१ )—रुह्धातोः 'प्रयै रोहिष्यै अव्यथिष्यै' इति सूत्रेण तुमर्थे निपातनात् इष्यै प्रत्यये गुणे 'रोहिष्यै' इति।

**अन्वेतवै** ( ई० ४० )—'अत्र कृत्यार्थे तवैकेन्केन्यत्वनः' इति सूत्रेण तवै-प्रत्ययः। अन्वेतव्यमिति लोके।

**कर्त्वम्** ( ई० ४२ )—अत्र 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति त्वन्प्रत्ययः। कृत्यमिति लोके।

**विसृपः** ( ई० ४६ )—'सृप्लृ गतौ' इत्यस्माद्धातोरत्र 'सृपि तृदोः कसुन्' इत्यनेन कसुन्प्रत्ययः।

**ऋजवः सन्तु पन्थाः** ( ई० ४० )—अत्र पन्थानः इति प्राप्ते 'सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः' इत्यनेन सुः।

**धीत्या, मत्या, सुष्टुत्या** ( ई० ४५, ४६ )—अत्र सर्वत्र 'सुपां सुलुक्पूर्व-सवर्णाच्छेयाडाड्यायाजालः' इति सूत्रेण धीती—मती—सुष्टुतीशब्देभ्यस्तृतीयैकवचनस्य पूर्वसवर्णदीर्घे कृते 'धीती, मती सुष्टुती, इति भवति। ( प्रमाणतः आन्तर्यात् सवर्णदीर्घत्वं बोध्यम् )।

ब्राह्मणासः ( ई० ४४, ४६, ४७, ४९, ५२ )—ब्राह्मणशब्दाज्जसि 'आज्जसेरसुक्' इत्यसुकि पूर्वसवर्णदीर्घे सस्य रुत्वे विसर्गे 'ब्राह्मणासः' इति । लोके तु 'ब्राह्मणाः' इति भवति ।

तन्वं पुषेम, तनुवं पुषेम ( ई० ४० )—अत्र 'तन्वादीनां छन्दसि बहुलम्' इत्यनेन बाहुलकात् अधातुत्वादप्राप्ते उवङ् विधीयते, तेन उवङ्पक्षे 'तनुवम्' इति । तदभावे 'वा छन्दसि' इत्यमि यणि 'तन्वम्' इति भवति ।

माद्भिः ( ई० ४८० )—'मस् भिस्' इति स्थिते 'मासश्छन्दसीति वक्तव्यम्' इति वार्तिकेन मासः सस्य तकारादेशे जश्त्वे 'सस्य रुत्वे विसर्गे 'माद्भिः' इति ।

प्रपायमग्निः ( ई० ४१ )—अत्र 'प्रसमुपोदः पादपूरणे' इति सूत्रेण प्रशब्दस्य द्वित्वमिति विशेषः ।

वाचस्पतिम्, दिवस्पुत्राय, दिवस्पृष्ठम् ( ई० ४८, ५०, ५१ )—अत्र सर्वत्र 'षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु' इति सूत्रेण षष्ठ्याः विसर्गस्य सत्वमिति विशेषः ।

इति वैदिकप्रकरणम्.



# अथ स्वरप्रकरणम्

गोपायतं नः ( ई० ४२, ४९, ५२ )—'धातोः' इत्यनेन 'गुप्' इत्यस्यान्तोदात्ते ततः आयप्रत्यये 'आद्युदात्तश्च' इति प्रत्ययस्वरेण आद्युदात्ते 'सनाद्यन्ताः—' इति धातुसंज्ञायां 'धातोः' इति यकाराकारस्योदात्ते, प्रागुक्तयोरुदात्तयोः सतोः पश्चात् प्रवृत्तत्वात् सति शिष्टः स यकाराकार एव उदात्तः, अतोऽयमेव बलवान् । तस्य 'अनुदात्तौ सुप्पितौ' इति सूत्रेण कृतानुदात्तेन शबकारेण सह 'अतो गुणे इति पररूपे 'एकादेश उदात्तेनोदात्तः' इत्युदात्ते थसस्तमादेशे तस्य 'तास्यनुदात्तेन्ङिदुपदेशात्' इत्यनेनादुपदेशात् परत्वादनुदात्तत्वम् तस्य च 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरिते 'स्वरितात् संहितायाम्' इति नकारस्य एकश्रुतौ 'गोपायतं नः' इति सिद्धम् ।

देवीं वाचम् ( ई० ४०, ४४, ४६, ४७, ४८ )—देवशब्दस्य अच्प्रत्ययान्तत्वात् 'चितः' इति अन्तोदात्तत्वे पचादिषु 'देवट्' इति पाठात् 'टिड्ढाणञ्—'

इति ङीपि तस्य 'अनुदात्तौ सुप्पितौ' इति अनुदात्तत्वे 'यस्येति च' इति इलोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' इति ङीपः उदात्तत्वे उक्तं रूपं सिद्धम् ।

**कर्तव्यम्** ( ई० ४१, ४५, ४६ )—अत्र तव्यप्रत्ययस्यादेः 'आद्युदात्तश्च' इत्यनेनोदात्तः इति विशेषः ।

यज्ञस्य, गुच्छ्याति ( ई० ४८, ५० )—'अनुदात्तौ सुप्पितौ' इत्यनेन 'यज्ञस्य' इत्यत्र सुपः, 'गुच्छ्याति' इत्यत्र तु पित्प्रत्ययस्य उदात्तः इति विशेषः ।

**क्व** ( ई० ४७ )—किंशब्दात् 'किमोऽत्' इत्यति 'तित्स्वरितम्' इति स्वरितत्वे 'क्वाति' इति किमः क्वादेशे उक्तं रूपं सिद्धम् ।

**कौञ्जायनाः** ( ४०, ५१ )—कौञ्जस्यापत्यानि बहूनि इति विग्रहे 'गोत्रे कुञ्जादिभ्यश्च्फञ्' इति च्फञ्प्रत्यये सुब्लुकि फस्यायनादेशे वृद्धौ 'व्रातच्फञोरस्त्रियाम्' इति ञ्यप्रत्यये 'ञ्याद्यस्तद्राजाः' इति तद्राजसंज्ञायां 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति लुकि विभक्तिकार्ये 'तद्धितस्य' इति अन्तोदात्ते 'कौञ्जायनाः' इति । नच 'चितः सकृतेर्बहुकजर्थम्' इत्यनेनैव अन्तोदात्तत्वे सिद्धे 'तद्धितस्ये'ति सूत्रं व्यर्थमिति वाच्यम्, ञित्स्वरबाधनार्थमस्यावश्यकत्वात् ।

**पौंस्याः** ( ई० ४१, ४८, ५० )—पुंसिमन् विधानि पौंस्यानि । पुंसः कर्मणि ब्राह्मणादित्वात् ष्यञि आदिवृद्धौ विभक्तिकार्ये 'ञ्नित्यादिर्नित्यम्' इति आद्युदात्तत्वे उक्तं रूपं सिद्धम् ।

चिकीर्षकः ( ई० ४०, ४४, ४५, ४७, ४९ )—सन्नन्तात् चिकीर्षशब्दात् ण्वुलि योरकादेशे अलोपे 'लिति' इति सूत्रेण लित्प्रत्ययात् पूर्वस्यैकारस्य उदात्तत्वे विभक्तिकार्ये 'चिकीर्षकः' इति । उदात्ते कर्तव्ये अलोपस्य स्थानिवत्त्वं तु न, स्वरविधौ तन्निषेधात् ।

इति स्वरप्रकरणम्



इति दरभंगामण्डलान्तर्गत 'तरौनी' ग्रामवासिपण्डितश्रीरामचन्द्रझा-व्याकरणाचार्यविरचिता मध्यकौमुदीप्रश्नोत्तरी समाप्ता



# प्रश्नपत्राणि

## १९३६

### तुदादिगणान्तभागे प्रश्नाः।

१ (क) स्वैरम्। षट् सन्तः। हरिः स्फुरति। एषु सन्धिकार्याणि प्रदर्श्य—मासपूर्वाय। तिलुजाम्। अनादृये। [illegible]। पन्थाः। हे उशन। अत्तुम्बैसौ। एषु यथेच्छं चत्वारः साधनीयाः। १२

(ख) 'त्यदादिष्विति दृशेः क्विन् विधानादन्यत्रापि कुत्वम्' इति ग्रन्थकाराभिप्रायः प्रकाश्यताम्। ३

अथवा

अचां स्थानप्रयत्नभेदाः निरूपणीयाः। ३

२ 'संहितैकपदे नित्या' अस्याः कारिकायाः अर्थं विलिख्य उदाहरणानि प्रदर्शनीयानि। २

३ क्राम्यति। ईयतुः, अधीयीत। विभराञ्चक्रे। अजनि। उपास्किरत्। संस्करोति। गृहीता। अचूचुरत्। एषु पञ्च प्रयोगाः साध्याः। १०

४ गद्धातोर्लिटि मध्यमपुरुषे क्रमधातोर्लुटि प्रथमपुरुषे ज्ञाधातोश्च लोटि उत्तमपुरुषे रूपाणि लेख्यानि। ३

अथवा

(१) लिङ्निमित्ते लृङ्क्रियातिपत्तौ (२) असिद्धवदत्राभात्—अनयोरर्थं विलिख्य लक्ष्यसंगतिविधेया। ३

## १९४६

### णिजन्तादि-स्त्रीप्रत्ययान्तभागे प्रश्नाः।

१ शातयति दूषयति। अररम्भत्। ईप्सति। मुमुक्षति वत्सं कृष्णः। बोभूयते। पराजयते। भार्यामुपयच्छते। विरमति। एषु सप्तानामेव विशेषसूत्रनिर्देशपूर्वकं साधुत्वप्रकारः प्रदर्शनीयः। ७

२ वास्तव्यः। देयम्। जनार्दनः। निशाकरः। परन्तपः। विद्वान्। निन्दकः। हस्तग्राहं युध्यन्ते। अभिनिविशते सन्मार्गम्। मासमधीते। दण्डेन घटः। पितृभ्यः स्वधा। शतस्य दीव्यति। रुदति रुदतो वा प्राव्राजीत। एषु अष्टौ साधनीयाः। ८

३ समासपदस्य कोऽर्थः। तस्य कियन्तो भेदाः उदाहरणपुरःसरमुपन्यस्ताम्।

अथवा

(१) अव्ययीभावे चाकाले (२) वृद्धोयूना (३) दिक्संख्ये संज्ञायाम् (४) राजदन्तादिषु परम् (५) पृषोदरादीनि० (६) किमः क्षेपे (७) स्वाङ्गाच्च०। एषु केषाञ्चन पञ्चानां सोदाहरणमर्थाः लेख्याः।

४ अधिहरि । पञ्चगवम् । अनश्वः । अतिमालः । कण्ठे कालः । केशाकेशि । दम्पती । गवासः । पदातिः । एषु पञ्चानां सिद्धिः कार्या १०

५ भावकर्मार्थकान् मत्वर्थीयांश्च कांश्चित् प्रत्ययानुल्लिख्य—वाङ्मयम् । उन्मनीकरोति । द्विदाम्नी । करभोरुः—रूपेष्वेतेषु कानिचित् त्रीणि साधयत । १०

—◦—

१९४७

मध्यकौमुद्या भ्वादिगणान्तभागे, विभक्त्यर्थसमासप्रकरणयोश्च प्रश्नाः ।

१ गव्यम् , शकन्धुः, प्राङ्षष्ठः, काँस्कान् , पुना रमते, मनोरथः, रामाणाम् , क्रोष्टा, तिसृणाम्, स्वसा, कतरत् , दध्ना, अनड्वान् , राजभ्याम् , पन्थाः, पिपठीः, उपानत् , पचन्ती, एषु केषाञ्चन नवानां पदानामेव विशेषसूत्रनिर्देशपूर्वकं साधुत्वप्रकारः प्रदर्शनीयः । १५

२ अधोलिखितेषु षण्णां सूत्राणां प्रत्येकं सोदाहरणमर्थं विशदयत—

(१) अधिशीङ्स्थासां कर्म (२) उपान्वध्याङ्वसः (३) येनाङ्गविकारः (४) जनिकर्तुः प्रकृतिः (५) कृत्यानां कर्तरि वा (६) यस्य च भावेन भावलक्षणम् (७) तृतीयासप्तम्योर्बहुलम् (८) क्तेन च पूजायाम् (९) अप्पूरणीप्रमाण्योः (१०) राजदन्तादिषु परम् । १२

३ अभूत् , नेदिथ, अक्षैषीत् , एधाञ्चक्रे, अचीकमत, ऊवतुः, ईजुः, जहार, जुगोप, बभूव ।

एतेषु केचिदष्टौ प्रयोगा एव विशेषसूत्रोल्लेखपुरःसरं साधु साधनीयाः । ८

४ अधोलिखितेषु रेखाङ्कितपदेषु याः खलु विभक्तयः सन्ति तासामर्थं सूत्रोल्लेखपूर्वकं प्रदर्शयत । ५

(क) निकषा लङ्काम् (ख) वृक्षं प्रति विद्योतते विद्युत् (ग) शताय क्रीतः (घ) आ मुक्तेः संसारः (ङ) केशेषु चमरी हन्ति ।

५ अधोलिखितेषु पञ्चानामेव पदानां समासनामोल्लेखपूर्वकं साधुत्वं साधु साधयत । १०

पञ्चगङ्गम् , हरित्रातः, पूर्वकायः, पुरुषव्याघ्रः, पूर्वरात्रः, केशाकेशि, रामकेशवौ ।

१९४७

मध्यसिद्धान्तकौमुद्या नियतभागे प्रश्नाः ।

सूचना—यथेच्छं केचन पञ्चैव समाधेयाः ।

१ जहि, विदाङ्कुरु, एधि, अध्यगीष्ट, धुक्षीष्ट, और्णुविष्ट, जुहवाञ्चकार, जहाहि, धत्तः, नेनिजानि—एषु यथेच्छं पञ्च प्रयोगा विशेषसूत्रनिर्देशपुरःसरं साधनीयाः । १०

२ दिदीये, अजनि, चिकाय, मुञ्चति, उपचस्कार, तृणेढि, अतत, कुर्वन्ति, स्तभान, ग्रहीता—एषु पञ्च सुष्ठु साधयत । १०

३ कथयति, अजीगणत्, अवीभवत्, अतिष्ठिपत्, चिकीर्षति, जिघत्सति, बाभज्यते, नरीनृत्यते, राजीयति, शब्दायते—एषु पञ्च प्रयोगाः साधनीयाः । १०

४ एधितव्यम्, वास्तव्यः, जेयम्, अर्यः, ब्रह्मभूयम्, शिष्यः, प्रतिगृह्यम्, अवश्यलाव्यम्, क्षुध्यः, वाच्यम्—एषु पञ्च प्रयोगा विग्रहवाक्योपन्यास-पूर्वकं संसाध्याः । १०

५ लवणः, कृशः, कुम्भकारः, गोदः, भिक्षाचरः, वशंवदः, जायाघ्नः, स्तुतस्त्वया विष्णुः, पवित्रम्—एषु यथेच्छं पञ्च प्रयोगाः सविग्रहप्रदर्शनं साधनीयाः । १०

६ बाहीकः, औत्सः, गार्ग्यः, दाक्षिः, ग्रैष्मम्, द्रुमः, ब्राह्मणासः, क, कर्तव्यम् चिकीर्षकः—एषु विशेषकार्याणि सूत्रोपन्यासपुरःसरं दर्शयत । १०

---

१९४८

मध्यकौमुद्या स्यादिगणान्तविभक्त्यर्थसमासभागेषु प्रश्नाः ।

१ सख्यम्, हर इह, प्रौहः, तट्टीका, सञ्छम्भुः, संस्कर्ता, पुंस्कोकिलः, शिवोऽर्च्यः, अहरहः, पुना रमते, रामेभ्यः, सर्वस्मात्, विश्वपौ, क्रोष्टा, स्त्रीणाम्, धुक्, मघोनः—एषु केषाञ्चन दशानां प्रयोगाणामेव विशेषसूत्रनिर्देशपूर्वकं साधुत्वप्रकारः प्रदर्शनीयः । १५

२ भवति, आतीत्, निषेधति, प्रणिगदति, आनर्च, गोपायाञ्चक्रतुः, जुगोपिथ, अब्लासीत्, शृणु, एधेत, अचीकमत—एतेषु केचिदष्टौ प्रयोगा एव विशेष-सूत्रोल्लेखपुरःसरं साधु साधनीयाः । १२

३ अधोलिखितेषु चतुर्णां सूत्राणां प्रत्येकं सोदाहरणमर्थं विशदयत— ८

(१) कर्तुरीप्सिततमं कर्म (२) कालाध्वनोरत्यन्तसंयोगे (३) इत्थंभूत-लक्षणे (४) षष्ठी चानादरे (५) यतश्च निर्धारणम् (६) एनपा द्वितीया ।

४ अधोलिखितेषु रेखाङ्कितपदेषु या खलु विभक्तयः सन्ति तासां विधायक-सूत्राणि लिखत । ५

(क) उपवसति वैकुण्ठं हरिः (ख) गोत्रेण गार्ग्यः (ग) ब्रह्मणः प्रजाः प्रजायन्ते (घ) कटे आस्ते (ङ) ग्रामं समया ।

५ अधोलिखितेषु पञ्चानां प्रयोगाणां समासनामोल्लेखपूर्वकं साधुत्वं साधु साधयत । १०

अधिहरि, पारेगङ्गम्, चोरभयम्, अपरकायः, अर्धपिप्पली, अब्राह्मणः, अर्धर्चः, द्विमूर्धः, व्यूढोरस्कः ।

## १९४८

### मध्यसिद्धान्तकौमुद्या नियतभागे प्रश्नाः ।

सूचना—सर्वे प्रश्नाः समानाङ्कभागिनः । एषु यथेच्छं केवलं पञ्चैव समाधेयाः ।

१ अवधीत्, आलीढ्, आयन्, शाधि, अजागारीत्, अक्षिपत्, बिभयाञ्चकार, अद्यात्, अजिघ्रः, अत्तः—एषु यथेच्छं पञ्च प्रयोगा विशेषसूत्रनिर्देशपुरस्सरं साधनीयाः । १०

२ आस्थत्, अपादि, स्तरिषीष्ट, जिघाय, बभर्थ, उद्विजिता, हिनस्मि, शिपिढ, असात्, असान—एषु पञ्च सुष्ठु साधयत । १०

३ अचूचुरत्, अचकथत्, अशूशवत्, रोपयति, क्षीपयति, जेगिल्यते, चेक्रीयते, बोभवीति, कण्डूयते, अपीपटत्—एषु पञ्चप्रयोगाः साधनीयाः । १०

४ संतिष्ठते, विरमति, अभावि, गौः पयो दुग्धे, वज्रशिरस्, भिदेक्रिमाः, आहत्यः, अवश्यलाव्यम्, वृष्यम्, चित्यः-एतेषु यथासम्भवं तत्र तत्र विग्रह-वाक्यप्रदर्शनपूर्वकं ससूत्रनिर्देशं पञ्चानां विशेषकार्याणि प्रदर्शयत । १०

५ त्रिपः, स्तम्बेरमः, जनमेजयः, शुष्कः, आलीनः, अस्पाकः, खनित्रम्, उपाधिः, अपामार्गः, दुष्पानः—एषु यथेच्छं पञ्च प्रयोगाः सविग्रहप्रदर्शनं साधनीयाः । १०

६ दैत्यः, औपगवः, बाहविः, वैयाकरणः, शिलापलः, शाकुनेयः, गव्यम्, लावणिकः, रामणीयकम्, वष्टः—एषु ससूत्रोपन्यासप्रदर्शनं विशेषकार्याणि प्रदर्शयत । १०

७ फेनिलः, कुटीरः, बहुशः, सर्पिष्का, कुरुः, शार्ङ्गिः, वाचस्पतिः, देवो युष्मति, पौंस्याः—एषु सूत्रोपन्यासप्रदर्शनपुरःसरं विशेषकार्याणि दर्शयत । १०



## १९४९

### मध्यकौमुद्या भ्वादिगणान्तविभक्त्यर्थसमासभागेषु प्रश्नाः ।

१ गव्यम्, तवल्कारः, प्रष्ठौहः, कर्कन्धुः, होतृकारः, गवाग्रम्, विष्णू इमौ, ह्न इन्द्रः, चक्रयत्र, रामष्टीकते, वागीशः, तल्लयः, वाग्घरिः, प्राङ्षष्ठः, चक्रिंस्त्रा-यस्व, हरिस्फुरति, शिवोऽर्च्यः, देवायिह, मनोरथः, गाम्, राः, चतुर्षु, पुम्भिः, वृत्रहा—एषु केषाञ्चन दशानां प्रयोगाणामेव विशेषसूत्रनिर्देशपू-र्वकं साधुत्वप्रकारः प्रदर्शनीयः । १५

२ बभूविथ, आतत्, प्रणिगदति, प्रणदति, ववनतुः, अगोपीत्, कमिता, अधात्, स्त्रियात्, द्रक्ष्यति, शृणु, एधसे, वर्त्स्यति, अभृत, अह्नन्—एतेषु केचिदष्टौ प्रयोगा एव विशेषसूत्रोल्लेखपुरःसरं साधु साधनीयाः । १२

३ लेखिष्यमाणेषु सूत्रेषु चतुर्णां सूत्राणां [illegible] सोदाहरणमर्थं विवृणुत (१) अपवर्गे तृतीया (२) उत्पातेन ज्ञापिते च (३) [illegible] प्रकृतिः (४) कृत्यानां कर्तरि वा (५) एनपा द्वितीया (६) सप्तम्यधिकरणे च ।

४ (१) गां दोग्धि पयः (२) अभिनिविशते सन्मार्गम् (३) ग्रामं [illegible] (४) विप्राय गां ददाति (५) तिलेभ्यः प्रतियच्छति माषान् ।

रेखाङ्कितपदेषु या खलु विभक्तयः सन्ति तासां विधायकसूत्राणि लिखत ।

५ मासपूर्वः, अक्षशौण्डः, अर्धनावम्, अपुत्रः, [illegible], शिवकेशवौ, मित्रावरुणौ, श्वशुरौ, हंसौ, महायशाः । एषु पञ्चानां प्रयोगाणां समासनामोल्लेखपूर्वकं साधुत्वं दर्शयत ।

१९४९

मध्यसिद्धान्तकौमुद्या [illegible] प्रश्नाः ।

सूचना—सर्वे प्रश्नाः समानाङ्कभागिनः । एषु यथेच्छं केचन पञ्चैव समाधेयाः ।

१ जघसिथ, एधि, अभीयात्, अचकात्, अख्यत्, अवोचत्, अदिद्युतः, जहाहि, अदित, नेनिजानि—एषु यथेच्छं पञ्च प्रयोगा विशेषसूत्रनिर्देशपुरस्सरं साधनीयाः ।

२ अशात्, दिदीये, दुधुविव, आनशे, वव्रश्च, उपचस्कार, आज्ञीत्, क्रुर्यात्, स्तभान, शश्वतुः—एषु पञ्च प्रयोगान् सुष्ठु साधयत ।

३ अलुलोकत्, औननत्, अवीभवत्, घातयति, जिघृक्षति, ईप्सति, वाशयते, अचर्वाः, राजानति, हलयति—एषु पञ्चरूपाणि ससूत्रनिर्देशं साधनीयानि ।

४—विजयते, संगच्छते, चलयति, अभाजि, तप्यते तपस्तापसः—पुरा भुङ्क्ते, देयम्, मार्ग्यः, शिष्यः, कृत्यम्—एतेषु यथासम्भवं सविग्रहवाक्यप्रदर्शनं ससूत्रनिर्देशञ्च पञ्चानां विशेषकार्याणि प्रदर्शयत ।

५ प्रज्ञः, श्राद्धकरः, प्रियंवदः, अवाया, ग्लानः, हितम्, आशंसुः—पाकः, परिक्रमम्, अवस्तारः—एषु पञ्च प्रयोगा विग्रहप्रदर्शनपुरस्सरं साधनीयाः ।

६ औत्सः, गार्ग्यः, षाण्मातुरः, वामदेव्यम्, शार्करम्; प्रावृषिकः, शाब्दिकः, आत्मनीनम्, आह्निकम्, पौरोहित्यम्—एतेषु सूत्रोपन्यासप्रदर्शनपूर्वकं विशेषकार्याणि दर्शयत ।

७ इष्टी, तुन्दिलः, स्थविष्ठः, गार्गी, श्वश्रूः, युवतिः, विरूपः, ब्राह्मणासः, गोपायतं नः, चिकीर्षकः—एषु ससूत्रोपन्यासं विशेषकार्याणि प्रदर्शयत ।

—०—

१९५०

मध्यकौमुद्या भ्वादिगणान्तविभक्त्यर्थसमासभागेषु प्रश्नाः ।

१ अमी ईशाः, उ उमेशः, चक्रिण्ढौकसे, चिद्रूपम्, एतन्मुरारिः, अञ्चितः, सञ्छम्भुः, पुंस्कोकिलः, सर्पिष्कल्पम्, कस्कः, लक्ष्मीच्छाया, हरिःशेते, हरिस्स्फुरति, देवा इह, अहर्गणः, पुना रमते, एष विष्णुः, रामेषु, सर्वेषाम्, विश्वपः, क्रोष्टा, स्त्रियै, वृत्रघ्नः, अस्माभिः, असकौ, तुदन्ती, सुपुमांसि, एषु केषाञ्चन दशानां प्रयोगाणामेव विशेषसूत्रनिर्देशपूर्वकं साधुत्वप्रकारः प्रदर्शनीयः । १५

२ भवति, बभूवतुः, आतीत्, न्यषेधत्, जगाद, नेदतुः, आनर्च, गोपायाञ्चकार, जीयात्, पपतुः, अदधत्, उवोढ, गाधते, एधेत, शृणुयुः, एतेषु केचिदष्टौ प्रयोगा एव विशेषसूत्रोल्लेखपुरःसरं साधु साधनीयाः १२

३ लेखिष्यमाणेषु सूत्रेषु चतुर्णां सूत्राणां प्रत्येकं सोदाहरणमर्थं विशदयत । ८

येनाङ्गविकारः, इत्थंभूतलक्षणे, कर्तृकर्मणोःकृति, यस्य च भावेन भावलक्षणम्, यतश्च निर्धारणम्, उभयप्राप्तौ कर्मणि, साधकतमं करणम् ।

४ गोत्रेण गार्ग्यः । जटाभिस्तापसः । अग्नये स्वाहा । कटे आस्ते । पापात् बिभेति ।

रेखाङ्कितपदेषु या खलु विभक्तयः सन्ति तासां विधायकसूत्राणि लिखत । ५

५ अधिहरि, पञ्चगङ्गम्, शङ्कुलाखण्डः, महावैयाकरणः, कुपुरुषः, अनश्वः, प्राचार्यः, कुम्भकारः, पूर्वरात्रः, द्विनावम्, चित्रगुः, एषु पञ्चानां प्रयोगाणां समासनामोल्लेखपूर्वकं साधुत्वं दर्शयत । १०

१९५०

मध्यसिद्धान्तकौमुद्या नियतभागे प्रश्नाः ।

सूचनाः—सर्वे प्रश्नाः समानाङ्कभागिनः । एषु यथेच्छं केचन पञ्चैव समाधेयाः ।

१ आदत्, जघनिथ, अयुः, निरियात्, मृड्ढि, सुषुषुपतुः, अजुहवुः, पिपूर्तः, अपारिष्टाम्, ऐयरुः—एषु यथेच्छं पञ्च प्रयोगाः ससूत्रनिर्देशं साधनीयाः । १०

२ त्रेसतुः, ननंष्ठ, अदीपि, असावीत्, ववरिथ, अलिपत्, अतृणेट्, अक्षत, बूर्यात्, गृहाण—एषु पञ्च प्रयोगान् सुष्ठु साधयत । १०

३ अपीपिडत्, अचीकृतत्, अपीपवत्, वाजयति, दुद्यूषति, ईर्त्सति, चञ्चूर्यते, समिधिता, कलयति—एतेषु पञ्च प्रयोगान् सूत्रनिर्देशपुरस्सरं साधु साधयत । १०

४ व्यतिलुनीते, आयच्छते, अध्यापयति, तायते, उदुम्बरः फलम्पच्यते, वसन् ददर्श, प्रयाणीयम्, शक्यम्, कृत्यः, आर्यगृह्यः—एतेषु यथासम्भवं विग्रहवाक्यप्रदर्शनपुरस्सरं ससूत्रनिर्देशञ्च पञ्चानां साधनं विधेयम् । १०

५ नन्दनः, सुन्दपरिमृजः, विश्वम्भरः, सुशर्मा, जीनः, चक्राणः, दात्रम्, रागः, अवतारः, हित्वा—एतेषु विग्रहप्रदर्शनपुरस्सरं पञ्च रूपाणि साधनीयानि । १०

६ दैव्यम्, वासिष्ठः, कौरव्यः, शाद्वलः, पौरस्त्यः, शौवस्तिकम्, कापित्थम् लावणिकः, मातृभोगीणः, कापेयम्—एषु विग्रहवाक्यप्रदर्शनपुरस्सरं ससूत्रनिर्देशञ्च पञ्च रूपाणि साधु साधनीयानि । १०

७ मानोज्ञकम्, साक्षी, दन्तावलः, चतुर्धा, अतिधीवरी, शार्ङ्गरवी, उक्थशाः, दिवस्पुत्राय, यज्वस्य, पौंस्याः—एतेषु पञ्चानां रूपाणां सविग्रहं सूत्रोपन्यासपूर्वकञ्च विशेषकार्याणि प्रदर्शयत । १०

---

१९५१

मध्यकौमुद्यां स्वादिगणान्तभागे विभक्त्यर्थसमासप्रकरणयोश्च प्रश्नाः ।

१ हरये । उपैति । शिवेहि । गवेन्द्रः । चक्रि अत्र । तट्टीका । उत्थानम् । सन्नच्युतः । पयस्पाशम् । भो देवाः । गीर्पतिः । शम्भू राजते । एषां केषुचित् षट्सु प्रयोगेषु सूत्रप्रदर्शनपूर्वकं सन्धिकार्यं निर्दिशत । ९

२ रामाय । पूर्वे । सखा । सर्वस्याः । श्रीपाय । युष्मान् । अमुना । पचन्ती । एषु चत्वारः प्रयोगाः सूत्रनिर्देशपूर्वकं साधनीयाः । ६

३ अभूत् । निषेधति । आनर्च । गोपायाञ्चकार । क्षीयात् । पिबति । जक्षतुः । एधेत । वर्त्स्यति । त्रेपे । अबोढाम् । निन्याय । एषु अष्टानां प्रयोगाणां विशेषसूत्रोल्लेखपुरस्सरं साधुत्वप्रकारं प्रदर्शयत । १२

४ श्रुधातोर्लोटि गम्धातोर्लुङि च मध्यमपुरुषे रूपाणि लिखत । ३

५ हृक्रोरन्यतरस्याम् । ध्रुवमपायेऽपादानम् । षष्ठी चानादरे । एषु द्वयोः सूत्रयोः सोदाहरणमर्थं विशदं विलिख्य, क्रोशमास्ते । जटाभिस्तापसः । पृथक् ग्रामेण । मम सेव्यो हरिः । व्रजं गामी । मातरि साधुः । एतेषु चतुर्णां विभक्तिविधायकसूत्रैः साधनं कुरुत । १०

६ अनुरूपम् । लोहितगङ्गम् । मासपूर्वः । पञ्चगवम् । चिन्मात्रम् । कण्ठेकालः । युवजानिः । गोव्याघ्रम् । छत्रोपानहम् । एषु पञ्चानां विग्रहवाक्यं प्रदर्श्य समासविधायकसूत्राणि लिखत । १०

१९५१

मध्यकौमुद्या अवशिष्टभागे प्रश्नाः ।

सूचनाः—एषु सप्तसु प्रश्नेषु यतेच्छं केचन । पञ्चैव समाधेयाः ।

१ अघसत्, ईयतुः, अजागरुः, ददरिद्रौ, अध्ययै, ऊर्णविता, जुहवांचकार, हेयात्, आरत्, अनेनिजम् । एषु पञ्चप्रयोगान् सुष्ठु साधयत । १०

